एवं सति यया बुद्ध्या देहोऽहमिति मन्यते।
अनात्मनात्मनो भ्रान्त्या सा स्यात् संसारबन्धना ॥
सर्वैर्विकल्पैर्हीनस्तु शुद्धो बुद्धोऽजरामरः।
प्रशान्तो व्योमवद् व्यापी चैतन्यात्मा सकृत्प्रभुः ॥
शर्करा गुडखण्डा वा यथैवेक्षुरसोद्भवाः।
तथाऽवस्थाप्रभेदाश्च बहुरूपा इहाऽऽत्मनः ॥
प्राणोऽचिरादविज्ञानमन्तर्याम्यविकारकः।
देशकालशरीराग्निं तस्याऽवस्थाभिधानवत् ॥
प्राणाद्यनन्तभेदैश्च स्वमात्मानं तु जालवत्।
विहृत्य संहरत्येष क्रीडमानः स्वयं हरिः ॥
अप्राप्तैरादिमध्यान्तैर्भ्रमभूतैस्त्रिभिः सदा।
जाग्रत्स्वप्नसुषुप्तैश्च छादितं विश्वतेजसम् ॥
तुर्यं तु परमात्मानमव्यक्तं शाश्वतं पदम्।
ज्ञेया जाग्रदवस्था च प्रजागरणजाग्रवत् ॥
स्वप्नावस्था च हृद्व्योम्नि सूक्ष्मनाड्या स्थितस्य च।
देहेन्द्रियगुणानां च परित्यागः सुषुप्तता ॥
संबोधः सर्वभावानां तुर्यं चिन्मात्रमुच्यते।
धूमाभ्रधूलिभिर्व्योम यथा न मलिनीयते ॥
प्राकृतैरपमृष्टो न विकारैः पुरुषस्तथा।
यथैकस्मिन् घटाकाशे मलैर्धूमादिभिश्चिते ॥
नाऽन्ये यान्ति मलिनतां दूरस्थाः कुत्रचित्क्वचित्।
तथा द्वन्द्वैरनेकैश्च जीवे च मलिनीकृते ॥
एकस्मिन्नाऽपरे जीवा मलिनाः सन्ति कुत्रचित्।

'भोज्यं' पृथिव्यादि विकारजातम्। 'शस्त्रं' लोहम्। 'तत्स्वभावानुगं मनः' स्वभावानुगः। 'धियि' बुद्धौ

महत्तत्वे । 'अभिधानवत्' देवदत्तादिनामवत् । 'दूरस्थाः' घटाकाशाः ।

तथा

एकस्मादेव चैतन्याज्जाताः क्षेत्रज्ञजातयः ।
लोहात् ज्वलनसन्दीप्तान्मरीचय इवाऽऽस्तृताः ॥
विभागत्यागसंयोगजन्ममृत्युसमागमैः ।
वर्जितः सर्वभूतात्मा नभः कुंभेष्ववस्थितः ।
तत्र सक्तस्तु पुरुषो बध्यते प्रकृतेर्वशात् ॥
चौरसंसर्गदोषेण बध्यते शीलवानिव ।
तुषारो बुद्बुदः फेनो जलस्य सहजास्त्रयः ॥
अग्नेर्धूमस्तथा विष्णोर्माय्यैषा सहजा सदा ।
एतां विमोहनिर्व्यक्तां मायां द्वैतस्वरूपिणीम्[1] ॥
अद्वैतं भावयेद्ब्रह्म सकलं निष्कलं सदा ।

[2]महाभारते

श्रीभगवानुवाच ।

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥
पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥

1 "एतां व्यामोहिनीं व्यक्तां मायां वै तस्य रूपिणीम्" इति ना.
2 भगवद्गीता, १३, १९-२१.

[1]प्रकृतिस्तेजोबन्नलक्षणा प्रवाहरूपेणाऽनादिः, सर्गः पुनः प्रलयः पुनरिति संसारस्याऽनादित्वात्। पुरुषः परमात्मांशोऽनादिरभिन्नोऽपि सन् परमार्थतो न कदाचिद्व्यक्तपूर्वः। 'कर्माऽविद्याभ्यामि'ति, कार्यं शरीरं, कारणानीन्द्रियाणि, तयोः कर्तृत्वे निर्वर्तकत्वे प्रकृतिः कारणं। एतेन भोग्यवर्गः सर्वः प्रकृतितो जायत इत्युक्तं भवति। 'प्रकृतिस्थः' कार्यकारणसङ्घातस्थः। 'भुंक्ते [2]प्रकृतिजान्' प्रकृतितोजातान् सुखदुःखमोहान् भुंक्ते। 'गुणेषु' कार्यकारणलक्षणेषु 'सङ्गो' विपरीतग्रहोऽहंममेति प्रत्ययः सदसद्योनिप्राप्तिषु कारणमित्यर्थः। 'सद्योनयो' देवाद्याः, 'असद्योनय'स्तिर्यगाद्याः, मध्ययोनयस्तु मनुष्या इति।

[3]तथा

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥

1 वी. मि. मोक्षप्रकाश, पृ. २६३—"**कल्पतरुस्तु**—प्रकृतिस्तेजोबन्नलक्षणा अनादिः पुनस्सर्गः पुनः प्रलय इति प्रवाहरूपेण। पुरुषो जीवः अनादिः परमात्मनोंऽशोऽभिन्नोपि सन्नविद्यया पूर्वं न कदाचिद्व्यक्त इति व्याचख्यौ".

2 वी. मि. मोक्षप्रकाश, पृ. २६३—"प्रकृतिर्माया। सा मिथ्यैव। तादात्म्येनोपगमः। 'प्रकृतिस्थ' इति **भाष्यकारः**। कार्यकारणसङ्घातस्थ इति **कल्पतरुः**; "'प्रकृतिस्थः', प्रकृतिसंसृष्टः" इति श्री**रामानुज**भाष्ये; "'प्रकृतिस्थः' प्रकृतौ अविद्यालक्षणायां स्थितः प्रकृतिस्थः" इति श्रीशाङ्करभाष्ये.

3 भगवद्गीता, ७, ४–७.

मत्तः परतरं नाऽन्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥
[1]ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाऽभिजानाति मामेभ्यः परमव्ययम् ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥

[तथा]

[2]मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाऽहं तेष्ववस्थितः ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥
यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥
न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥

1 भगवद्गीता, ७, १२–१५.
2 भगवद्गीता, ९, ४–१३.

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्त्तते ॥
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥

[तथा]

[1]अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममायया ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

'जीवभूतां' जीवत्वं प्राप्ताम् । भोक्तृत्वेनाऽवस्थितां चेतनाम् । 'प्रोतं' ग्रथितम् ।

विष्णुपुराणे

[2]विस्तारः सर्वभूतस्य विष्णोर्विश्वमिदं जगत् ।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥

तथा

[3]ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥

1 भगवद्गीता, ४, ६–८.
2 १, २७, ८४.
3 १, ५, ४०.

[1]ज्योतींषि विष्णुर्भुवनानि विष्णुः
वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं
यदस्ति यन्नाऽस्ति च विप्रवर्य ॥
ज्ञानस्वरूपो भगवान् यतोऽसा-
वशेषमूर्तिर्न च वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वं
कर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि
भवन्ति नो वस्तुषु वस्तुभेदाः ॥
वस्त्वस्ति किं कुत्रचिदादिमध्य-
पर्यन्तहीनं सततैकरूपम् ।
यच्चाऽन्यथात्वं द्विज याति भूयो
न तत्तथा तत्र कुतो हि तत्वम्[2] ॥
[2]मही घटत्वं घटतः कपालिकाः
कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयै-
रालक्ष्यते ब्रूहि किमत्र तत्वम्[3] ॥
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित् कदाचित् द्विज वस्तुजातम् ।

1 विष्णुपुराण (गोरखपुर) २, १२, ३८–४७.

2 Sentence confused in all three manuscripts: restored from printed वि. पु.

3 वस्तु इति मु. पु., पृ. १७५.

विज्ञानमेकं निजकर्मभेद-
विभिन्नवृत्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोक-
मशेषलोभादि निरस्तसंज्ञम् ।
एकं सदेकं परमं परेशः
स वासुदेवोऽस्ति यतो न किञ्चित्[1] ॥
सद्भाव एवं भवतो मयोक्तो
ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं
तत्राऽपि चोक्तं भुवनाश्रितं ते ॥
यज्ञे पशुर्वह्निरशेष ऋत्विक्
सोमः सुराः स्वर्गमयश्च कामः ।
इत्यादिकर्माश्रितमार्गदृष्टं
भूरादिभोगाश्च फलानि तेषाम् ॥
यच्चैतत् भुवनगतं मया तवोक्तं
सर्वत्र व्रजति हि तत्र कर्मवश्यः ।
ज्ञात्वैतत् ध्रुवमचलं स चैकरूपं
तत्कुर्याद्विशति हि येन वासुदेवम् ॥

'ज्ञानस्वरूपं' ज्ञानं चित्स्वरूपं, ब्रह्म तदात्मकं जगत् । यथा मृत्स्वरूपो घटः । 'अबुद्धयः' अतत्त्वज्ञाः । '[2]अर्थ-स्वरूपं' यत् स्वभावं प्रकृत्याद्यर्थोपादनतया तत्स्वरूपम् ।

1 'स वासुदेवो न यतोऽन्यदस्ति' इति मु. पु., पृ. १७५.

2 वी. मि. मोक्षप्रकाश, पृ. २७१ :—

"अर्थस्वरूपं प्रकृत्याद्यर्थकार्यकारित्वेन सद्रूपं मन्यमानाः 'मोहसंप्लवे' अज्ञानसागरे, मिथ्याज्ञानसागरे इति कल्पतरुः"

'मोहसंप्लवे' मिथ्याज्ञानसागरे। 'यदस्ति यन्नास्ति चे'ति यद्भावस्वरूपं तत्सर्वं स एवेत्यर्थः। 'न च वस्तुभूतः' न यत् पृथिव्यादिभिः भूतः। 'नो वस्तुषु वस्तुभेद' इति न क्रियाकारकवस्तुषु पृथिव्यादिषु जातस्वभावेष्वेव सत्सु वस्तुभेदात् घटादयो भवन्ति। किन्तु संकल्पवशेनेत्यर्थः।

तथा च श्रुतिः

'संकल्पादेवाऽस्य पितर उपतिष्ठन्ति' इति।

व्याख्यातश्चेदं 'संकल्पादेव तु तच्छ्रुतेः' इत्यत्र वेदान्तसूत्रे। 'असत्यमन्य'दिति अन्यद्ब्रह्माद्यतिरिक्तमसत्यमन्यथात्वं भजते विनश्यतीत्यर्थः। 'सद्भाव एवं' इत्यादि श्लोके कर्मकालस्याऽनित्यत्वात् 'ज्ञानेन वासुदेवप्राप्तौ यत्नः कर्तव्य इत्युक्तं भवति।

इति कृत्यकल्पतरौ मोक्षकाण्डे वैराग्यपर्व[1]।

1 This is mentioned thus in the विषयनिर्देश.

॥ १५ ॥

# अथ ज्ञानकर्मोपयोगः

तत्र महाभारते

मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैमहर्षिभिः ।
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ॥
कर्मनिष्ठां वदन्त्यन्ये यतयः सूक्ष्मदर्शिनः ।
प्रहायोभयमप्येतद्ज्ञानं कर्म च केवलम् ॥
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ।

तथा

शुक उवाच ।

यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥
एतद्वै श्रोतुमिच्छामि तद्भवान् प्रब्रवीतु मे ।
एतयोऽन्योन्यवैरूप्ये वर्तते प्रतिकूलतः ॥
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि सुताऽक्षरौ ॥
यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा ।
श्रृणुष्वैकमनाः पुत्र सङ्करं ह्येतदन्तरम् ॥
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥

कर्मणा जायते प्रेत्य मूर्तिमान् षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ॥
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः ।
तेन ते देहजातानि वशायन्त उपासते ॥
ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः ।
न ते कर्म प्रपश्यन्ति कूपं नद्यां पिबन्निव ॥
कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचते ॥
यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्द्धते ॥

'धर्मनैपुण्यदर्शिनः' परमं धृतिसाधनं तारतम्यं विजानन्तः ।

यथाऽऽह मनुः[1]

अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनमिति ।

'भवाभवौ' जन्ममरणे । 'विद्यया' ब्रह्मज्ञानेन ।

मार्कण्डेयपुराणे

पुत्र उवाच

एवं संसारचक्रेऽस्मिन् भ्रमता तात संकटे ।
ज्ञानमेतन्मया प्राप्तं मोक्षसंप्राप्तिकारणम् ॥
विज्ञायतेऽत्र सर्वोऽयमृग्यजुःसामसंज्ञितः ।

'ऋग्यजुःसामभिः' बोधितः ।

1 Not found in मनुस्मृति but it is in the याज्ञवल्क्यस्मृति, १, ८.

योगियाज्ञवल्क्यः

परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशमयश्चैव कर्म नेच्छन्त्यपण्डिताः ॥
ज्ञानकर्मसमायोगात् परमाप्नोति पूरुषम् ।
पृथग्भावे न सिध्येत उभे तस्मात् समाश्रयेत् ॥
ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्मात् द्वयोरेव भवेत्तु सिद्धिः
न ह्येकपक्षो विहगः प्रयाति ॥

'न सिध्येत' न मुच्येत । 'उभे' ज्ञानकर्मणी ।

बृहस्पतिः[1]

सत्यं यज्ञस्तपो दानमेतद्धर्मस्य लक्षणम् ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥

मार्कण्डेयपुराणे

[2]उपयोगेन पुण्यानामपुण्यानां च पार्थिव ।
कर्तव्यमिति नित्यानामकामकरणात्तथा[3] ॥
असञ्चयादपूर्वस्य क्षयात्पूर्वार्जितस्य च ।
कर्मणो बन्धमाप्नोति शरीरं च पुनःपुनः ॥

'अकामकरणात्'काम्यकर्माकरणादित्यर्थः ।

[4]मनुः

सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।

1 संस्कारकाण्ड, ३.
2 ३९, ६–७.
3 अकालमरणात्तथा—ना.
4 १२, ८८—

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥
इह चाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते[1] ॥
प्रवृत्तं कर्म संसेव्य देवानामेति सात्मताम्[2] ।
निवृत्तं सेवमानं तु भूतान्यत्येति पञ्चमे ॥
सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥
यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥
[3]एतद्विजस्य सामग्र्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नाऽन्यथा ॥

'सुखाभ्युदयिकं' इत्यत्र सुखस्याऽभ्युदय उत्पत्तिः फलमस्यास्तीति मत्वर्थीयष्ठन् । 'नैःश्रेयसिकं' निःश्रेयसं मोक्षः प्रयोजनं यस्य कर्मणस्तत्तथा । 'प्रवृत्तनिवृत्ते कर्मणी' यथाक्रमं संसारप्रवृत्तिनिवृत्तिहेतुभूते उच्येते । सात्मतां समानशक्तित्वम् । 'स्वाराज्यं' इति स्वयमेव राजते प्रकाशत इति स्वराट् ब्रह्म तस्य भावः स्वाराज्यं ब्रह्मभावं प्राप्नोतीत्यर्थः ।

महाभारते

[4]लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥

1 उपदिश्यते इति मु. पु, पृ. ४०३.
2 साम्यतामिति मु. पु, पृ. ४०३.
3 'एतद्धि जन्मसाफल्यं' इति. मु. मनौ (पृ. ४०४.)
4 भगवद्गीता, ३, ३–९.

न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च सन्यसनादेव सिद्धिं समधिगच्छति ॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥
कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥
यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥

'लोकेस्मिन्' अपवर्गमार्गाधिकृते । 'निष्ठा' स्थितिः । 'ज्ञानयोगेन सांख्यानां' सम्यक् ख्यातवन्तः साक्षात्कृतात्मतत्वाः सांख्याः, तेषां प्राधान्येनस्थितिरुक्ता । कर्माऽपि यथाप्राप्तमाश्रमविहितं ज्ञानपरिपाकार्थं प्रत्यवायपरिहारार्थं चाऽस्त्येव । 'कर्मयोगेन योगिनां'मिति सत्वयोगवतामीश्वराराधनार्थं कर्म कुर्वतां कर्मप्राधान्येन स्थितिः । आत्मसाक्षात्कारविज्ञानोपायत्वात् । तथा चोक्तम्—

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतलप्रख्ये पश्येदात्मानमात्मनि ॥

'आत्मनि' बुद्धावित्यर्थः । पापक्षयश्च धर्मात् 'धर्मेण पापमपनुदति । तपसा ब्रह्म विजिज्ञासस्व' इति श्रुतेः । ज्ञानमपि सामान्यरूपमस्तीति क्वचित् किञ्चित् प्रधानमिति विशेषो न समुच्चये ।

ज्ञानकर्मसमायोगात् परमाप्नोति पूरुषम् ।
पृथग्भावेन सिध्येत उभे तस्मात् समाश्रये

दिति योगियाज्ञवल्क्यवचनात् । ज्ञानादेव केवलान्मुक्तिरिति सर्वं श्रौतं स्मार्तं कर्म न कर्तव्यं बन्धहेतुत्वादिति निराकृतम् । "न कर्मणामनारंभान्नैष्कर्म्यं" इत्यादिना, नैष्कर्म्यं, पुण्यापुण्यरहितत्वं, मोक्षमित्यर्थः[1] । 'सन्न्यसनात्' उत्तमाश्रमग्रहणात् । 'असक्तः' फलसङ्गरहितः । "यज्ञार्थात् कर्मणोऽन्यत्रे"ति 'यज्ञ' शब्देन यज्ञपुरुष उच्यते । 'यज्ञो वै विष्णुरि'ति श्रुतेः । [2]तेनेश्वराराधनार्थं कर्म वर्जयित्वाऽन्यत् स्वर्गादिफलार्थं कर्म बन्धाय भवतीत्यर्थः ।

तथा च

[3]यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥

'यत्करोषि' स्नानादि । 'यदश्नासी'त्यत्राऽशनं प्राणाहुतिरूपम् ।

1 वी. मि. मोक्षप्रकाश, पृ. २९९ :—"**कल्पतरुस्तु** 'न कर्मणामनारम्भात् नैष्कर्म्यम्' इत्यादिना, 'नैष्कर्म्य' पुण्यरहितत्वं मोक्षम् इति व्याचख्यौ । **तद्भाष्य**विरोधात् उपेक्ष्यम् ."

शङ्कररामानुजभाष्ययोः तत्पदस्य ज्ञाननिष्ठापरत्वेनोक्तत्वात्, मित्रमिश्रखण्डनं युक्तमिति प्रतिभाव्यम् । परन्तु **आनन्दतीर्थ**भाष्ये, नैष्कर्म्यपदस्य मोक्षार्थकत्वं **लक्ष्मीधर**वदुक्तम् .

2 ईश्वराराधनत्वेन कर्मानुष्ठानं अङ्गीकुर्वता लक्ष्मीधरेण, 'परमपुरुषाराधनवेषस्य' इत्युक्तवतां श्रीरामानुजाचार्याणां मतमनुसृतमिति शङ्का.

3 भगवद्गीता, ९, २७–२८.

<u>तथा</u>

[1]कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिध्यसिध्योः समो भूत्वा समत्वं योग उच्यते ॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥

'कर्मण्येवेति' कर्मण्येव आश्रमोचिते तवाऽधिकारोऽवश्यकर्तव्यत्वात्, न तु कर्मफलेषु। मा ते फलेष्वधिकार इत्येतस्याऽर्थं स्फुटयति—'मा कर्मफलहेतुर्भूरिति'। कर्मफलं कामयमानः 'कर्महेतुः' कर्मणोऽनुष्ठाता। 'मा भूस्त्वमिति' फलेच्छा त्वया मा कर्तव्येत्युक्तं भवति। 'मा ते सङ्गोऽस्त्वकर्मणीति' न चैवं सति कर्मकरण आसक्तिस्त्वया न कर्तव्या, किं तु कर्तव्यान्येव कर्माणीत्यर्थः। कथं तर्हि कर्माणि कर्तव्यानि? इत्याकांक्षायामाह—'योगस्थ' इत्यादि। यानि नित्यानि कर्माणि सन्ध्यावन्दनादीनि 'योगस्थः' फलसङ्गं त्यक्त्वा कर्मफलसिद्ध्यसिद्ध्योः हर्षविषादरहितत्वेन समो भूत्वा कुरु। ईश्वराराधनार्थे च क्रियमाणे कर्मणि नाऽस्ति वैषम्यम्। स एव कर्त्ता तदात्मकं च कर्मेति

1 भगवद्गीता, २, ४७–५१.

क्रियमाणं तत्प्राप्तिहेतुत्वं भजत इत्यर्थः। तदिदं 'समत्वं योग उच्यते'।

समत्वबुद्धियुक्तादस्मात् कर्मणो दूरेण ज्ञानरहितं कर्म जघन्यम्। 'बुद्धौ शरणमन्विच्छ' बुद्धिमाश्रयेत्यर्थः। 'फलहेतवः'। फलं प्रवृत्तिहेतुर्येषां ते तथा। 'बुद्धियुक्त' इति ईश्वराराधनार्थं कर्मेत्यनया बुद्ध्या युक्तः कर्म कुर्वन्'। नाऽऽरब्धे शुभाशुभे कर्मणी जहातीत्यर्थः। 'योगाय युज्यस्व' समत्वयोगाय यतस्व। 'कर्मसु कौशल'मिति। इदं यद् ब्रह्मणि समर्पणं कर्मणः फलसङ्कल्परहितता च। 'कर्मजमि'ति शुभाशुभकर्मजं[1] 'फलं त्यक्त्वा' जन्मलक्षणरहिताः सर्वोपद्रवशून्यं विष्णोः स्थानं गच्छन्ति इत्यर्थः।

<u>तथा</u>

[2]न मां कर्माणि लिंपन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते॥
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्॥

'न मां कर्माणीति', न मां कर्माणि लिंपन्ति यतो मम कर्मफले स्पृहा नाऽस्ति। एवमन्योऽपि यः स्वव्यापारे

1 वी. मि. मोक्षप्रकाश, पृ. ३१३:–"सर्वोपद्रवशून्यं विष्णोस्स्थानं गच्छतीत्यर्थः' इति **कल्पतरुः**"

**मित्रमिश्रः** अद्वैतानुसारिस्वमतं उपन्यस्य **लक्ष्मीधरस्य** भिन्नाभिप्रायं दर्शयत्यत्र.

'कर्मजं बुद्धियुक्ता' इति श्लोकव्याख्यान**शाङ्करभाष्ये**, जन्मबन्धविनिर्मुक्ताः, "जीवन्त एव जन्मबन्धाद्विनिर्मुक्ताः सन्तः 'पदं' परमम् विष्णोः मोक्षाख्यं गच्छन्ति। 'अनामयं' सर्वोपद्रवरहितमित्यर्थः" इति.

2 भगवद्गीता, ४, १४–१५.

वीतफलतृष्णः 'परमेश्वरायेद'मिति कर्मणि प्रवर्त्तते सोऽपि कर्मभिर्न बध्यत इत्यर्थः[1]।

[2]तथा

अर्जुन उवाच।

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥

श्रीभगवानुवाच।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥
ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥
सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यक् उभयोर्विन्दते फलम् ॥
यत्सांख्ये[3] प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥
सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाऽधिगच्छति ॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥
नैव किञ्चित् करोमीति युक्तो मन्येत तत्ववित्।

1 सात्विकत्यागविषये शङ्कररामानुजानन्दतीर्थानतिवर्तते लक्ष्मीधरोऽत्र; यथा—अत्र सात्विकत्यागस्य भाष्यकारैः अननुसन्धीयमानत्वात .

2 भगवद्गीता, ५, १-१२.

3 यत्सांख्यैः इति गीतापाठः

पश्यन् शृण्वन् स्पृशन् जिघ्रन्
अश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
कायेन मनसा बुध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥

*कर्मसन्न्यासात् कर्मयोगो विशिष्यत इति । कृतानां कर्मणामीश्वरे सन्न्यासो य उक्तस्तस्माद्ब्रह्मैव कर्तृ कारकान्तरं च कर्म चेति यः कर्मयोगः स विशिष्यते । कथम्? द्वैतविषयो हि संन्यासः, कर्मयोगः पुनरद्वैतविषयः, साक्षात् सम्यग्दर्शनाश्रय इत्यर्थः* । 'निर्द्वन्द्वो' रागद्वेषादिद्वन्द्वरहितः । 'सन्न्यासस्थितिः' सन्न्यासयोगव्यतिरेकेणाऽनुष्ठीयमानो दुःखं प्राप्तुं भवति न तु ब्रह्मसाक्षात्कारायेत्यर्थः । ब्रह्म नचिरेणाऽधिगच्छति ब्रह्माऽचिरेण साक्षात् करोति । '[1]योगयुक्तः' अद्वैतदर्शने स्थितः । 'विशुद्धात्मा' निर्मलीकृतबुद्धिः । 'विजितात्मा' जितमनोवृत्तिः । इन्द्रियाणीन्द्रियार्थेष्विति । 'एतेष्विन्द्रियार्थेषु इन्द्रियाणि वर्तन्ते' मम

* Passage between asterisks cited by Mitramis'ra, मोक्षप्रकाश, पृ. ३१५.

1 "योगेन युक्तः योगयुक्तः" इति । "वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तः" इति च **श्रीशङ्करभाष्ये** । योगयुक्तः कर्मयोगयुक्तः इति **श्रीरामानुजभाष्ये.**

नाऽत्र कर्तृत्वमिति चित्तं धारयेत्। 'योगयुक्तो'मन्येतेत्यर्थः। 'शान्ति माप्नोति नैष्ठिकीं'सुखमात्यन्तिकं प्राप्नोति।

[1]तथा

अर्जुन उवाच।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन॥

श्रीभगवानुवाच।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपःकर्म न त्याज्यमिति चाऽपरे॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः॥
यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥
नियतस्य तु सन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥
कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः॥

1 भगवद्गीता, १८, १-१२.

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्वसमाविष्टो मेधावी छिन्नसंशयः ॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्यासिनां क्वचित् ॥

'सङ्गं त्यक्त्वा हि कथ्यन्ते' पूजादि फलं त्यक्त्वा फलानि चाऽदृष्टार्थानि । 'नियतस्य' नित्यनैमित्तिकस्य । 'नद्वेष्ट्यकुशलं' इति दुःखसाधनमवमानाक्रोशताडनादि । 'न द्वेष्टि' पूर्वकर्मफलं मया भुज्यत इति मत्वा शाम्यति । 'कुशले' सत्कारपूजादिसुखसाधने ।

[1]तथा

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाऽक्रियः ॥
यं संन्यासमिति प्राहु र्योगं तं विद्धि पाण्डव ।
न ह्यसन्यस्तसङ्कल्पो योगी भवति कश्चन ॥
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।

[2]तथा

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चाऽस्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥

1 भगवद्गीता, ६, १-३.
2 भगवद्गीता, ३, १७-२६.

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवाऽपि संपश्यन् कर्तुमर्हसि ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
न मे पार्थाऽस्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नाऽनवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्माऽनुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥

आत्मन्येव रतिर्यस्य न विषयेषु स 'आत्मरतिः'। आत्मन्येव तृप्तो नाऽन्नरसादिना स आत्मतृप्तः। आत्मन्येव सन्तुष्टः 'आत्मसन्तुष्टः', नाऽर्थलाभेन तस्य कार्यं विद्यते। परं ज्योतिरुपसंपन्नस्य लोकव्यवहाराभावात् तस्य कर्तव्यं नाऽस्ति। अधिकारहेत्वभावात् अकृतेन निषिद्धाकरणेन तत्करणनिमित्तप्रत्यवायानुत्पत्तिलक्षणोऽर्थो नास्ति। 'अर्थ-व्यपाश्रयः' प्रयोजनापेक्षा। यतो लोकव्यवहारानुगतस्य कर्मत्यागानुत्पत्तिः तस्मात्कर्मफलेच्छारहितोऽवश्यं कर्त्तव्यं

कर्म कुर्वित्याह-तस्मादसक्त इत्यादिना। 'कर्मणैव' न कर्म-त्यागेन लोकसंग्रहं लोकपरिपालनं। जोषयेत् सेवयेत्।

[1]तथा

मयि सर्वाणि कर्माणि संन्यस्याऽध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥

'अध्यात्मचेतसा', ब्रह्मैवेदं सर्वं कार्यकरणजातमित्य-भेददृष्ट्या।

[2]तथा

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम्॥
यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते॥
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥

'निराशी' निर्गतफलासङ्गः। 'यतचित्तात्मा' संय-तात्मा। 'कार्यकारणसङ्घातः'। शारीरमात्रं शरीरनिर्वर्त्यं। शास्त्रोक्तं कर्म केवलं फलरहितम्। 'नाऽऽप्नोति किल्बिषं' संसारं नाप्नोतीत्यर्थः। मुक्तस्य रागादिद्वेषैरिति शेषः।

1 भगवद्गीता, ३, ३०.
2 भगवद्गीता, ४, २०–२४.

'यज्ञाय' परमात्मने। 'ब्रह्मार्पणं' स्रुक्स्रुवादि। अर्प्यते अनेनेति व्युत्पत्त्या। 'ब्रह्मकर्मसमाधिना' ब्रह्मैव कर्मेति समाधियुक्तेन।

[1]तथा

सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन्॥
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्त्तते॥
नाऽऽदत्ते कस्यचित् पापं न चैव सुकृतं विभुः।
अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः॥

[2]तथा

श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप।
सर्वं कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनः तत्वदर्शिनः॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि॥

1 भगवद्गीता, ५, १३–१७.
2 भगवद्गीता, ४, ३३–४२.

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनाऽऽत्मनि विन्दति ॥
श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वाऽपरां शान्तिमचिरेणाऽधिगच्छति ॥
अज्ञश्चाऽश्रद्दधानश्च संशयात्मा विनश्यति ।
नाऽयं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥
तस्मादज्ञानसंभूतं हृत्स्थं[1] ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥

[2]<u>**तथा**</u>

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः[3] ।
ज्ञानदग्धैस्तथा कृत्स्नैर्नाऽऽत्मा संयुज्यते पुनः ॥

1 कृत्स्नमिति मातृकासु, नादृतः, यतः भाष्यकारैः आदृतः पाठः हृत्स्थमेव.

2 This s'loka is not from भगवद्गीता.

3 Three lines ending with this are wanting in स.

॥ १६ ॥

# अथात्मज्ञानहेतवः

[1]याज्ञवल्क्यः

वेदार्थवचनं यज्ञो ब्रह्मचर्यं तपो दमः ।
शुद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥

ब्रह्मपुराणे

अधीत्य वेदांश्च तदीयमर्थं
बुद्ध्या गृहीत्वा च स शब्दविच्च[2] ।
श्रुत्वा च मीमांसकधर्मशास्त्र-
मात्मा लभ्यो दुर्लभोऽयं त्रिलोके ॥
अहिंसयेन्द्रियासंगैर्वैदिकैश्चैव कर्मभिः ।
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम् ॥
तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥

महाभारते

[3]ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतलप्रख्ये पश्यन्त्यात्मानमात्मनि ॥

1 Mitākṣara and Aparārka read वेदानुवचनं and श्रद्धोपवासः—३, १९०.

2 स शब्दवित् सः—ना.

3 शां—२०२, ९.

मत्स्यपुराणे

[1]अयमेव क्रियायोगो ज्ञानयोगस्य साधकः ।
कर्मयोगं विना ज्ञानं कस्यचिन्नेह विद्यते ॥

[2]याज्ञवल्क्यः

आचार्योपासनं वेदशास्त्रस्य च विवेचनम् ।
तत्कर्मणामनुष्ठानं सङ्गः सद्भिः गिरः शुभाः ॥
स्त्र्यालोकारम्भविगमः सर्वभूतात्मदर्शनम् ।
त्यागः परिग्रहाणां च जीर्णकाषायधारणम् ॥
[3]विषयेन्द्रियसंयोगतन्द्रालस्यविवर्जनम् ।
शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥
[4]रजस्तमःक्षयः सत्वशुद्धिर्निःस्पृहता दमः ।
एतैरुपायैः संसिद्धः स तु योग्यमृतीभवेत् ॥
तत्त्वस्मृतेरुपस्थानात् सत्वयोगात् परिक्षयात् ।
कर्मणां सन्निकर्षाच्च सतां योगः प्रवर्त्तते ॥

'शरीरपरिसंख्यानं' शरीराशुद्धित्वास्थिरत्वादिदोषपरत्वेनाऽनुसन्धानम्। 'प्रवृत्तिषु' गमनागमनादिकासु सूक्ष्मप्राणिवधादिदोषदर्शनम् । 'तत्त्वस्मृतेः' आत्मतत्वचिन्तनात्। 'उपस्थानात्' अवधारणात् ।

[5]महाभारते

श्रीभगवानुवाच ।

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।

1 ५२, ११.
2 ३, १५५–१६०.
3 विषयेन्द्रियसंरोध इति अपरार्के मिताक्षरापाठः
4 नीरजस्तमता इति अपरार्के मिताक्षरापाठः
5 भगवद्गीता—१३, ७–११.

21

आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषार्थदर्शनम्[1] ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ।
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।

'आत्मविनिग्रहो' मनोवृत्तिनिरोधः । 'असक्तिः' वैराग्यम् । 'अभिष्वङ्ग'स्तत्परता । 'तत्त्वज्ञानार्थदर्शनम्' आत्मज्ञानार्थं यच्छास्त्रस्य पर्यालोचनम् । 'एतज्ज्ञानं' इदं ज्ञानसाधनम् ।

तथा

नैतादृशं ब्राह्मणस्याऽस्ति वित्तं
यथैकता सत्यताऽममता च ।
शीलस्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥

मार्कण्डेयपुराणे

[2]सङ्गः सर्वात्मना त्याज्यः स वै त्यक्तुं न शक्यते ।
सद्भिः सह स कर्तव्यः सतः सङ्गो हि भेषजम् ॥

1 दोषानुदर्शनमिति श्रीशङ्करभाष्यपाठः

2 ३७, २३.

[1]महाभारते

श्रीभगवानुवाच ।

अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोभित्वं[2] मार्दवं क्लीबचापनम्[3] ॥
तेजः क्षमा धृतिः शौचमद्रोहो नाऽभिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाऽभिजातस्य पार्थ संपदमासुरीम् ॥
दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता ।

'तेजः' प्रभुत्त्वम् ।

[4]तथा

ईश्वरः सर्वभूतानां हृद्देशोऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतमं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥

1 भगवद्गीता—१६, १-५.
2 अलोलुप्त्वं इति ना. स. and शङ्करभाष्यम्
3 ह्रीरचापलम् इति ना. स. and शङ्करभाष्यम्
4 भगवद्गीता,—१८, ६१-६६.

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

'सर्वधर्मान् परित्यज्ये'ति । सर्वधर्मान् परिहाय ममाऽऽराधनं कुर्विति । भगवदाराधनं कुर्विति[1] भगवदाराधनप्राधान्यप्रतिपादनपरमिदम् ।

[2]<u>तथा</u>

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च नमन्ति [3]च ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवाऽनुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥

[4]<u>याज्ञवल्क्यः</u>

स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥

1 "कर्मयोगज्ञानयोगभक्तियोगरूपान् सर्वान् धर्मान परमनिःश्रेयससाधनभूतान् **मदाराधनत्वेन** अतिमात्रप्रीत्या यथाधिकारं कुर्वाण एवोक्तरीत्या फलकर्मकर्तृत्वादिपरित्यागेन परित्यज्य मामेकमेव कर्तारं **आराध्य** प्राप्यमुपायं चानुसन्धत्स्व । एष एव सर्वधर्माणां शास्त्रीयपरित्याग इति"—इति **श्रीरामानुजभाष्ये**.

2 १०, ८–११.

3 नमन्ति इति, स. च रमन्ति च इति, ना., श्रीशङ्करभाष्यपाठः

4 ३, १९१.

॥ १७ ॥

## सपल्लवयोगः

अथ योगः । तत्र देवलः

देवमनुष्ययोः द्विविधः पुरुषार्थोऽभ्युदयो निःश्रेयसमिति । तयोरभ्युदयः पूर्वोक्तः द्विविधः । निश्रेयसमिति सांख्ययोगौ । पञ्चविंशतितत्वज्ञानं सांख्यम् । विषयेभ्यो निवृत्याऽभिप्रेतेऽर्थे मनसोऽवस्थापनं योगः । उभयत्राऽपवर्गः फलम् ।

विष्णुपुराणे

[1]आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥

दक्षः

वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥

विष्णुपुराणे

तदेतत्कथितं राजन्नविद्याया मया तव ।
क्लेशानां च क्षयकरं योगादन्यन्न विद्यते ॥

1 ६, ७, ३१.

योगियाज्ञवल्क्यः

सर्वधर्मान् परित्यज्य योगधर्मं समाश्रयेत् ।
सर्वे धर्माः सदोषास्तु पुनरुत्पत्तिकारकाः ॥
[1]नेहाऽतिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥

'अतिक्रमः' अनारम्भः नाशोऽत्र नैष्फल्यम् ।

महाभारते

[2]यथा वाऽनिमिषाः स्थूला जालं भित्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगात्तत्पदं वीतकल्मषाः ॥

'अनिमिषाः' मत्स्याः ।

तथैव वागुरां भित्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥
लोभजानि तथा राजन् बन्धनानि बलान्विताः ।
[3]भित्वा योगात् परं मार्गं गच्छन्ति विमलाः शिवम् ।

यथा च शकुनाः सूक्ष्माः प्राप्य जालमरिन्दमम् ।

तत्राऽशक्ता[4] निबध्यन्ते विमुच्यन्ते बलान्विताः ।
कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परन्तप ॥
अबलाश्चैव नश्यन्ति मुच्यन्ते च बलान्विताः ।
[5]अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ॥

1 गीतायामपि दृश्यते—२, ४०.

2 शां—३०६, १२.

3 शा—३०६, १७.

4 'तत्र शक्ता' इति ना. and स; तत्र सक्ता इति मु. महाभारते.

5 शा—३०६, ३१.

युक्तः सम्यक् तथा योगी मोक्षं प्राप्नोत्यसंशयम् ।
[1]यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ॥
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ।
अभक्तमटवीप्रायं दावदग्धमहीरुहम् ॥
पन्थानं तस्कराकीर्णं क्षेमेणाऽतिपतेन्नरः ।
योगमार्गं समाश्रित्य यः कश्चिद्व्रजते द्विजः ॥
क्षेमेणोपरमं मार्गं बहुदोषो हि स स्मृतः ।

तथा

अपि वर्णावकृष्टस्तु नारी वाऽधर्मकांक्षिणी ।
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥

[2]तथा

नास्ति बुद्धिरयुक्तस्य न चाऽयुक्तस्य भावना ।
न चाऽभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥

[3]तथा

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि ततोऽधिकः ।
कर्मिभ्यश्चाऽधिको योगी तस्माद्योगी भवाऽर्जुन ॥
योगिनामपि सर्वेषां मद्गतेनाऽन्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥

## अथ योगाङ्गानि

तत्र महाभारते

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि योगस्य ।

1 शा—३०६, ५१–५३.
2 भगवद्गीता—२, ६६.
3 भगवद्गीता—६, ४६–४७.

मार्कण्डेयपुराणे

[1]प्रागेवाऽऽत्माऽऽत्मना ज्ञेयो योगिनां स हि दुर्जयः ।
कुर्वीत तज्जये यत्नं तस्योपायं शृणुष्व मे ॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान् ध्यानेनाऽनीश्वरान् गुणान् ॥

'दोषान्' स्वेदवेपथुप्रभृतीन् । 'संसर्गान्' विषयसंबन्धान् । 'अनीश्वरान्' प्राकृतान् ।

देवलः

रागद्वेषमोहाः कषाया उच्यन्ते । तेषां यमनियमलक्षणेन तपसा पञ्चविधेन तत्त्वज्ञानेन चाऽपकर्षणम् । कषायपाचनम् ।

विष्णुपुराणे

[2]ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां सुमना नयन् ॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान् ।
कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च च कीर्तिताः ।
विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः ॥
एकं तत्राऽऽसनादीनां समास्थाय गुणैः पुनः ।
[3]यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥

1 ३९, ९–१०.
2 ६, ७, ३६.
3 समाख्यैः इति उद. मातृ.

**वायुपुराणे**

[1]पद्ममूर्द्धासनं वाऽपि तथा स्वस्तिकमासनम् ।
आस्थाय योगी युञ्जीत कृत्वा तत्प्रवणं मनः ॥

**मार्कण्डेयपुराणे**

[2]प्राणापाननिरोधश्च प्राणायाम उदाहृतः ।

**विष्णुपुराणे**

[3]प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते हि यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ।

'सबीजो' मन्त्राद्यालम्बनः ।

**बृहस्पतिः**

[4]बद्ध्वाऽऽसनं नियम्याऽसून्स्मृत्वा चर्य्यादिकं तथा ।
सन्निमीलितदृङ्मौनी प्राणायामं समभ्यसेत् ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
[5]आदानं बोधमुत्सर्गं वायोस्तिस्रः समभ्यसेत् ।
ब्रह्माणं केशवं शम्भुं ध्यायन् मुच्येत बन्धनात् ॥
रक्तं[6] पितामहं ध्यायेद्विष्णुं नीलोत्पलप्रभम् ।
श्वेतं त्र्यक्ष्यं हरं चैव संसारार्णवतारणम् ॥

1 ११–१३.
2 ३९, १२.
3 ३, ७, ४०.
4 आचारकाण्डम्—३१, ३२.
5 संस्कारकाण्डम्—५५९.
6 आचारकाण्डम्—३८; प्रजापतिमिति मु. पु. पाठः

अतीतानागतानर्थान् विप्रकृष्टांस्तिरोहितान् ।
विजानातीन्दुसूर्यर्क्षं ग्रहाणां ज्ञानसंपदम् ॥
तुल्यप्रभावस्तु यदा योगी प्राप्नोति संविदम् ।
तदा संविदिति ख्याता प्राणायामस्य सा स्थितिः ॥
यान्ति प्रसादं येनाऽस्य मनः पञ्च च धातवः ।
इन्द्रियाणीन्द्रियार्थाश्च स प्रसाद इति स्मृतः ॥

'पञ्चधातवः' पृथिव्यादि पञ्चभूतानि ।

तथा

[1]प्राणायामा दश द्वौ च धारणा साऽभिधीयते ।
द्वे धारणे स्मृतो योगो योगिभिस्तत्त्वदर्शिभिः ॥
तथा वै योगयुक्तस्य योगिनो नियतात्मनः ।
सर्वदोषाः प्रणश्यन्ति स्वस्थश्चैवोपजायते ॥
वीक्षते च परं ब्रह्म प्राकृतांस्तु गुणान् पृथक् ।
व्योमादिपरमाणुश्च तथाऽऽत्मानमकल्मषम् ॥
इत्थं योगी यताहारः प्राणायामपरायणः ।
जितां जितासनो भूमिमारोहेत यथा गृहम् ॥
दोषान्मोहं तथा व्याधिमाक्रान्ता भूरनिर्जिता ।
विवर्द्धयति नारोहेत्तस्माद्भूमिमनिर्मितम्[2] ॥
[3]उपायश्चाऽत्र कथितो योगिभिः परमर्षिभिः ।
येन व्याध्यादयो दोषा न जायन्ते हि योगिनः ॥
यथा तोयार्थिनस्तोयं पद्मनालादिभिः शनैः ।
आपिबेयुस्तथा योगी पिबेद्वायुं जितश्रमः ॥

1 ३९, ३५.
2 अनिर्जिताम्—स.
3 ३९, ४२–४६.

प्राङ्नाभ्यमुदरे चाऽथ तृतीया च तनोपरि[1] ।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु ॥
किञ्चित् परस्यात्तस्मिंस्तु धारणा परमा स्मृता ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसाम्यताम् ॥
[2]प्राणानामुपसंरोधात् प्राणायाम उदाहृतः ।
धारणेत्युच्यते ज्ञेयं धार्यते यन्मनोऽनया ॥
शब्दादिभ्योऽनिवृत्तानि यदक्षाणि यतात्मभिः ।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततस्स्मृतः ॥

'अनिवृत्तानि' स्वविषये संसक्तानि । 'योगेन चित्तवृत्तिनिरोधेन', 'योगश्चित्तवृत्तिनिरोध' इति पातञ्जलेऽभिधानात् ।

देवलः

अणुत्वाच्चापल्याल्लाघवाद्बलवत्वाद्वा योगभ्रष्टस्य मनसः पुनः प्रत्यानीयार्थे योजनं प्रत्याहारः ।

'अर्थो' त्वात्मा ।

विष्णुपुराणे

[3]शब्दादिष्वनुरक्तानि निगृह्याणीति योगवित् ।
कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥
पश्यता परमा तेन जायतेति च नात्मनाम् ।
इन्द्रियाणामवश्यैस्तै र्न योगी योगसाधकः ॥

1 तथोरसि इति स.
2 ३९, ४०–४१.
3 ६, ७, ४३.

देवलः

शरीरेन्द्रियमनोबुध्यात्मनां धरणाद्धारणा ।

हारीतः

मनसो धारणं अन्तःशरीरे, हृदि, ललाटे, परंब्रह्मात्मज्योतिरादित्यमहीनभस्सु जलभाजनवन्मनसस्त्वेकधारणाद्धारणा ।

'अन्तर्देहे', हृदयादौ, बहिर्वापहृतपाप्मादि गुणक परब्रह्मादौ, यन्मनसो धारणं सा धारणा। 'जलभाजनवत्' इति, यद्भाजनगतं जलं तस्य भाजन एव स्थितिः। एव मेतेषु सत्सु, गतिर्मनसोऽवस्थितिरेकत्र देशविशेषे धारणाज्ञायत इति। 'एवं च देशवन्न चित्तस्य' यः साधारण उक्ता स्यात्। तथा च पातञ्जलसूत्रम्। "देशवन्न चित्तस्य धारणा" इति।

शङ्खः

मनस्संयमनं तज्ज्ञै र्धारणेति निगद्यते ॥

विष्णुपुराणे

[1]प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतं ततः कुर्यात् स्थितं चेतः शुभाश्रये ॥

महाभारते

[2]सुस्थेयं क्षुरधारासु निशितासु महामते ।
धारणासु सुयोगस्य दुःस्थेयमकृतात्मभिः ॥

1 ६, ७, ४५.
2 शा—३०६, ५४.

विपन्ना धारणा यस्मान्नयन्ति न शुभां गतिम् ।
नेत्रहीनं यथा नारं पुरुषाणां तु वै नृप ॥
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्मदुःखं च सुखं च परिमुञ्चति ॥
योगकृत्येषु योगानां ध्यानमेव परं बलम् ।
तथाऽपि द्विविधं ध्यानमाहुर्वेदविदो जनाः ॥
एकाग्रभावं मनसः प्राणायामास्तथैव च ।
तद्रूपप्रत्ययायैकसन्ततिश्चान्यनिःस्पृहा ॥
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ।
तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत् ॥
मनसा ध्याननिरताद्यः समाधिः सोऽभिधीयते ।

अथाहारादिनियमः

तत्र मार्कण्डेयपुराणे

[1]भैक्षं यवागू तक्रं वा पयो यावकमेव वा ।
फलं मूलं विपक्कं वा कणपिण्याकसक्तवः ॥
इत्येते वै शुभाहारा योगिनां सिद्धिकारकाः ।

महाभारते

[2]कणानां भक्षणो युक्तः पिण्याकस्य च भक्षणे ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥
भुञ्जानं यावकं भक्ष्यं दीर्घकालमरिन्दम ।
एकदाऽसौ विशुद्धात्मा योगी बलमवाप्नुयात् ॥

1 ४१, ११.
2 शा—३०६, ४३-४५.

पक्षान्मासान् ऋतून् स्थित्वा सञ्चरंश्च ग्रहांस्तथा।
अपः पीत्वा पयोमिश्राः योगी बलमवाप्नुयात्॥

वायुपुराणे

[1]योगिनां चैव सर्वेषां श्रेष्ठं चान्द्रायणं स्मृतम्।
एकंद्वे त्रीणि चत्वारि शक्तितो वा समाचरेत्॥

महाभारते

मोक्षधर्मेषु नियतो लब्धाहारो जितेन्द्रियः।
प्राप्नोति ब्रह्मणःस्थानं यत्परं प्रकृतेर्ध्रुवम्॥

तथा

सदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु।
संप्रवर्त्तमुदीर्णं च निगृह्णीयाद्विजोत्तमः।
योषितां न कथा श्राव्या न निरीक्ष्या निरम्बराः॥
कथञ्चिद्दर्शनादासां दुर्बलानाऽऽविशेद्रजः।
रागोत्पत्तौ चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः॥
मग्नः स्वप्ने[2] च मनसा त्रिर्जपेदघमर्षणम्।
पाप्मानं त्रिर्दहत्येवं अन्तर्भूतरजोमयम्॥

'दुर्बलान्' अजितेन्द्रियान्। 'स्वप्ने च' स्त्रीविषयानुरागोत्पतौ इत्यर्थः।

मार्कण्डेयपुराणे

[3]शून्येष्वेवावकाशेषु वनेषु च गुहासु च।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपाक्रमेत्॥

1 १६, १६.
2 स्वल्पेन मनसा—ना. and स.
3 ४१, २१.

[1]सशब्देऽग्निजलाभ्याशे जीर्णे गोष्ठे चतुष्पथे ।
शुष्कपर्णचये नद्यां श्मशाने ससरीसृपे ॥
सभये कूपतीरे वा चैत्यवल्मीकसञ्चये ।
देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्जयेत् ॥

महाभारते

[2]विमुक्तः सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः ।
सपूर्वापररात्रिषु धारयेन्मनसाऽऽत्मनि ॥
[3]मूत्रोत्सर्गे पुरीषे च भोजने च नराधिप ।
त्रिकालं नाऽभियुञ्जीत शेषं युञ्जीत तत्परः ॥

मार्कण्डेयपुराणे

[4]नाऽऽध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः ।
युञ्जीत योगं राजेन्द्र योगी सिध्यर्थमादृतः ॥
नाऽतिशीते न चोष्णे वा द्वन्द्वे नाऽप्यनिलात्मके ।
कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः ॥
[5]सत्त्वस्याऽनुपपत्तौ च देशे काले विवर्जिते ।
नाऽसतो दर्शनं योगे तस्मात्तं परिवर्जयेत् ॥
दोषानेताननाहृत्य मूढत्वाद्यो युनक्ति वै ।
विघ्नाय तस्य ये दोषा जायन्ते तान्निबोध मे ॥
बाधिर्यं जडता लोपः स्मृतेर्मूकत्वमन्धता ।
ज्वरश्च जायते सद्यः तद्वदज्ञानयोगिनः ॥

1 ३९, ४८, ५०.
2 शा—३११, १३.
3 शा—३११, ९.
4 ३९, ४६–४७.
5 ३९, ५०–५३.

## अथ दोषचिकित्सा

तत्र वायुपुराणे

[1]तेषां चिकित्सां वक्ष्यामि दोषाणां च यथाक्रमम् ।
यथा शाम्यन्ति ते दोषाः प्राणायामसमुत्थिताः ॥
स्निग्धां यवागूमत्युष्णं भुक्त्वा तत्र तु धारयेत् ।
अनेन क्रमयोगेन वातगुल्मं प्रणश्यति ॥
तदावर्त्तप्रतीकारमिदं कुर्याच्चिकित्सितम् ।
सर्वगात्रप्रकंपेन समारब्धस्य योगिनः ॥
इमां चिकित्सां कुर्वीत यथा संपद्यते सुखम् ।
मनसा पर्वतं काये विष्टम्भीकृत्य धारयेत् ॥
उरोघाते [2]रसस्थाने कण्ठदेशे च धारयेत् ।
[3]वचोघाते तथा वाचि बाधिर्ये श्रोत्रयोस्तथा ॥

'समारब्धस्य' क्रान्तस्य । विष्टंभीकृत्य धारयेत् पर्वतं धारयेत् ।

मार्कण्डेयपुराणे

[4]अमानुषं सत्त्वमन्तर्योगिनं प्रविशेद्यदि ।
वाय्वग्निधारणादेनं देहसंस्थं विनिर्दहेत् ॥

'अमानुषं सत्त्वं' रक्षःपिशाचादि ।

वायुपुराणे

[5]कृष्णसर्पोपबाधे तु धारयेत् हृदयोदरे ।
महर्जनस्तपःसत्यं हृदि कृत्वा तु धारयेत् ॥

1 ११, ३९.
2 उरस्स्थानं, इति, मु. पाठः
3 त्वचोऽवघाते तां वाचि बाधिर्ये श्रोत्रयोस्तथा, इति, मु. पाठः
4 ३९, ६०.
5 ११, ५५.

विषस्य तु पलं पीत्वा विशल्यां धारयेत्ततः ।
सर्वतः सनगां पृथ्वीं कृत्वा मनसि धारयेत् ॥
हृदि कृत्वा समुद्रांश्च तथा सर्वाश्च देवताः ।
सहस्रेण घटानां तु युक्तः स्नायीत योगवित् ॥
उदके कण्ठमात्रे तु धारणां मूर्ध्नि धारयेत् ।
प्रतिस्रोतोपविष्टस्तु[1] धारयेत्सर्वगात्रकम् ॥
शीर्णार्कपर्णपुटकैः पिबेत् वल्मीकमृत्तिकाम् ।
चिकित्सितविधिर्ह्येष [2]क्रमशो योगिनां हितः ॥
व्याख्यातस्तु समासेन योगदृष्टेन हेतुना ।

अथ योगविधिः

[3]तत्र महाभारते

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चाऽनवलोकयन् ॥
प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥

1 विषाविष्टो for पविष्टस्तु in printed वायुपुराण.

2 विश्रुतो योगनिर्मितः इति, मु. पाठः

3 भगवद्गीता—६, १०–१४.

वायुपुराणे

[1]ॐकारं प्रथमं कृत्वा चन्द्रसूर्यौ नमस्य च ।
आसनं स्वस्तिकं कृत्वा पद्ममर्द्धासनं तथा ॥
समजानुरेकजानुर्वा उत्तानस्वस्तिकोऽपि वा ।
समो दृढासनो भूत्वा संहृत्य चरणावुभौ ॥
पार्ष्णिभ्यां वृषणौ च्छाद्य तथा प्रजननं ततः ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनः पञ्च च मारुतान् ॥
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ।
यस्तु प्रत्याहरेत् कामान् कूर्मोऽङ्गानीव सर्वशः ॥
तथाऽऽत्मरतिरेकस्थः पश्यत्यात्मानमात्मना ।
पूरयित्वा समीरं तु सबाह्याभ्यन्तरः शुचिः ॥
आकण्ठनाभियोगेन प्रत्याहारमुपक्रमेत् ।

[2]याज्ञवल्क्यः

ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ।
उत्तानं किञ्चिदुन्नम्य[3] मुखं विष्टभ्य चोरसा ॥
निमीलिताक्षः सत्वस्थो दन्तैर्दन्तानसंस्पृशेत्[4] ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥
सन्निरुद्धेन्द्रियग्रामो नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वाऽपि प्राणायाममुपक्रमेत् ॥

'सत्त्वस्थः' कामक्रोधादिरहितः ।

1 ११, १३.

2 ३, १९८–२००.

3 उन्नम्य इति विज्ञानेश्वरपाठः, उन्नम्य इति अपरार्कपाठः

4 संस्पृशन् इति अपरार्कमिताक्षरापाठः

देवलः

देवतायतनं शून्यागारगिरिकन्दरनदीपुलिनगुहारण्या-नामन्यतमे शुचौ निराबाधे विभक्ते समुपस्तीर्णमानसं कृत्वा, तस्मिन्लघ्वाहारो निरामयः, शुचिः शिरोग्रीवापाणि-पादौ च समास्थाप्य, शरीरमृजुं समाधाय, शिश्नवृषणाव-पीडयन्, यत्किञ्चिदपाश्रित्य स्वस्तिकं भद्रकं मण्डलं वाऽधि-ष्ठाय, उदङ्मुखः, प्राङ्मुखो वा, दन्तैर्दन्तानसंस्पृश्य, अक्षि-भ्यामव्यक्तमनुन्मील्य च, मुखनासिकाभ्यां ऐक्यावसन्ना-ग्रस्थितदृष्टिः, सर्वेन्द्रियाणि संहृत्योर्ध्वं प्राणानुदीर्य, मनसा तच्चिन्तनं ध्यानम् ।

[1]महाभारते

नाऽत्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चाऽतिस्वप्नशीलस्य जाग्रतो नैव चाऽर्जुन ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥
तथाच देवमुपशान्तेन दान्तेनैकान्तशीलिना ।
आत्मारामेण वृद्धेन यो ह्यात्मा स नसंशयः ॥

दक्षः

कषायमोहविक्षेपलज्जाशङ्कादिचेतसः ।
व्यापारास्तु समाख्याताः तैर्हीनं वशमानयेत् ।
कुटुम्बैः पञ्चभिर्ग्रामषष्ठं तत्र महान्मनः ।
देवासुरमनुष्यैर्वा संजेतुं नैव शक्यते ॥

1 भगवद्गीता—६, १६, १७.

बलेन परराष्ट्राणि गृह्णन् शूरस्तु नोच्यते ।
[1]जितेन्द्रियेन्द्रियग्रामः स शूरः कथ्यते बुधैः ॥

## महाभारते

[2]श्रीभगवानुवाच ।

सङ्कल्पप्रभवान् कामान् त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥
शनैःशनैरुपरमेत् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥
युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मनिर्वाणमत्यन्तं[3] सुखमश्नुते ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याऽहं न प्रणश्यामि स च मे न प्रणश्यति ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते[4] ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

1 जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः—ना. and स.

2 भगवद्गीता—६, २४–२८–३५; श्रीभगवानुवाच appears only at the beginning of the chapter.

3 ब्रह्मसंस्पर्शम् इति ना. स. and श्री शङ्करभाष्यपाठश्च.

4 उदयपुरमातृकायां 'न स भूयोऽपि जायते' इति पाठः

अर्जुन उवाच ।

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याऽहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याऽहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥

श्रीभगवानुवाच ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥

'न प्रणश्यामि' न तिरो भवामि। 'सर्वथा वर्तमानोऽपि' मयि वा बुद्धिविकारे वा प्रपञ्चे ब्रह्मबुद्ध्या। 'चेतसा वर्तमानो' मय्येवाऽसौ वर्त्तत इत्यर्थः।

तथा

पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ।
शब्दं न विन्देच्छ्रोत्रेण स्पर्शं चाऽपि न वेदयेत् ॥
रूपं न चक्षुषा विन्द्याज्जिह्वया च रसांस्तथा ।
श्रेयांस्यपि च सर्वाणि जह्याद्योगेन योगवित् ॥
पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान् ।
तमो मनसि संसृज्य पञ्चवर्गविचक्षणः ॥
समादध्यान्मनो भ्रान्तमिन्द्रियार्थैः सपञ्चभिः ।
निःसंसारि निरालम्बं पञ्चद्वारं चलाचलम् ॥
पूर्वध्यानपथे धीरः सदा दध्यान्मनोन्तरम् ।
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम् ॥

एवं ध्यानपथः पूर्णो मया समनुवर्णितः ।
तस्य तत्पूर्वसंरुद्धमात्मषष्ठमनोन्तरम् ।
स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरो यथा ॥
जलबिन्दुर्यथा लोकपर्णस्थः सर्वतश्चलः ।
एवमेवाऽस्य तच्चित्तं भवति ध्यानवर्त्मनि ॥
समाहितं क्षणं किञ्चित् ध्यानवर्त्मनि तिष्ठति ।
पुनर्वायुपथभ्रान्तं मनो भवति वायुवत् ॥
अनिर्वेदो गतक्लेशो गततन्द्री विमत्सरः ।
समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥
विचारश्च वितर्कश्च विवेकश्चोपजायते ।
मुनेः समादधानस्य प्रथमं ध्यानमात्मनः ॥
मनसा क्लिश्यमानस्तु स समाधानकाम्यया ।
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवाऽऽत्मनो हितम् ॥
स्वयमेव मनश्चैकं पञ्चवर्गश्च भारत ।
पूर्वं ध्यानपथं प्राप्य नित्ययोगेन शाम्यति ॥
न तत्पुरुषकारेण न च दैवेन केनचित् ।
सुखमेष्यसि तत्तस्य यदेवं संयतात्मनः ॥
सुखेन तेन संयुक्तो वंस्यते ध्यानकर्मणि ।

'पिण्डीकृत्य' प्रत्याहृत्य ।

दक्षः

लोको वशीकृतो यैस्तु यैरात्मा च वशीकृतः ।
इन्द्रियार्थान् यतस्तेषां योगं वक्ष्याम्यशेषतः ॥
नाऽरण्यसेवनाद्योगो नाऽनेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिर्वा न योगः कस्यचिद्भवेत् ॥

न वै पद्मासनाद्योगो न नासाग्रनिरीक्षणात् ।
न वै शास्त्रातिरिक्तेन शौचेन भवति क्वचित् ॥
न मौनमन्त्रकुहकैरनेकैः कुसृतैस्तथा ।
लोकयात्राभियुक्तस्य न योगः कस्यचिद्भवेत् ॥
अभियोगात्तथाऽभ्यासात्तस्मिन्नेव विनिश्चयात् ।
पुनः पुनरनुद्वेगाद्योगः सिध्यति नाऽन्यथा ॥
आत्मचिन्ताविनोदेन शौचक्रीडनकेन च ।
सर्वसत्त्वसमत्वेन योगः सिध्यति नाऽन्यथा ।
यस्त्वात्ममिथुनो नित्यमात्मक्रीडस्तथैव च ॥
आत्मानन्दश्च सततमात्मन्येव समाहितः ॥
आत्मन्येव च सन्तुष्टः सन्तुष्टो नाऽन्यमानसः ।
आत्मन्येव च तृप्तस्य योगः सिध्यति नाऽन्यथा ॥
स्वप्नेऽपि योऽभियुक्तश्च जाग्रदेव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥

[1]याज्ञवल्क्यः

अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुः ॥
यथाविधानेन पठन् सामगायत्र्यमव्ययम्[2] ।
सावधानस्तथाऽभ्यासात्[3] परमात्माऽधिगच्छति ॥
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।
आवैणकं सरोबिन्दुमुत्तरं गीतकानि तु ॥
ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका ॥

1 ३, १११–११६.
2 सामगायमविच्युतम् इति विज्ञानेश्वरपाठः;
सामगायत्यविस्वरम् इति अपरार्कपाठः (पृ. ९९०.)
3 तदभ्यासात् परं ब्रह्माधिगच्छति इति मिताक्षरापाठः

गेयमेतत्तदभ्यासकारणान्मोक्षसंज्ञकम् ।
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ॥
तालज्ञश्चाऽप्रयासेन मोक्षमार्गं नियच्छति ।
गीतज्ञो यदि गीतेन नाऽऽप्नोति परमं पदम् ।
रुद्रस्याऽनुचरो भूत्वा तेनैव सह मोदते ॥

'अपरान्तकमुल्लोप्यम्' अत्र प्रकर्यो रेणकानि स्वरबिन्दुसहितमुत्तरं चेति। एतानि प्रकरणाख्यानि सप्तगीतकानि ऋग्गाथाद्याः चतस्रो गीतिकाः। एतदपरान्तकादिगीतजातं परमात्मतया चिन्तितं मोक्ष साधनत्वान्मोक्षसंज्ञकं ज्ञातव्यम्। तदभ्यासस्यैकाग्रताप्रतिपादनद्वारेणौत्सुक्यापत्तिहेतुत्वात्। 'श्रूयत' इति। श्रुतिर्द्वाविंशतिधा। सा तु स्वरेषु। तथाहि षड्जमध्यमपञ्चमाः प्रत्येकं चतुः श्रुतयः। ऋषभधैवते प्रत्येकं त्रिश्रुती। गान्धारनिषादौ प्रत्येकं द्विश्रुती। जातयस्तु षड्जातयः शुद्धाः। सङ्करजास्त्वेकादश। एवमष्टादशविधाः। 'गीतज्ञो यदि' इति। गीतिज्ञो यदि कथञ्चिद्विघ्नतो योगस्थः सन्मुच्यते तदा रुद्रानुचरत्वं लभत इत्यर्थः।

॥ १८ ॥

## युक्तलक्षणम्

तत्र <u>महाभारते</u>

युक्तस्य तु महाराज लक्षणान्युपधारयेत् ।
निर्वाते तु यथा दीपो ज्वलेत्स्नेहसमन्वितः ॥
निश्चलोर्द्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः ।
पाषाण इव मेघोत्थैर्यथा बिन्दुभिराहतः ॥
नालं चालयितुं शक्यः तथा युक्तस्य लक्षणम् ।
शङ्खदुन्दुभिनिर्घोषैः विविधैर्गीतवादितैः ॥
क्रियमाणैर्न कम्पेच्च युक्तस्यैतन्निदर्शनम् ।
तैलपूर्णं यथा पात्रं कराभ्यां धारयन्नधः ॥
सोपानमारुहेद्भीतः तर्ज्यमाणोऽसिपाणिभिः ।
संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत् ॥
तथैवोत्तरमाणस्य एकाग्रमनसस्तथा ।
स्थिरत्वादिन्द्रियाणां च निश्चलत्वे तथैव च ॥
एवं युक्तस्य तु मुनेर्लक्षणान्युपधारयेत् ।
संयुक्तः पश्यति ब्रह्म यत्तत्परममव्ययम् ॥
महतस्तमसो मध्ये स्थितं ज्वलनसन्निभम् ।
एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम् ॥
कालेन महता राजन् श्रुतिरेषा सनातनी ।

<u>तथा</u>

स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलेश्वर ।
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ॥

तदा मदुपलक्षितस्कन्धाश्रिते भर्त्तव्ये तवाऽपि भारः[1] स्यादिति भावः। तथाऽन्यजन्तुभिर्भारः सम इत्यन्वयः। न केवलं शिबिकोत्थः भारः समः। किन्तु शैलभारोऽपि समः। 'जाल्मः' असमीक्ष्यकारी[2] यन्निमित्तमित्यागमनहेतुविषयः। 'किमागमनकारणमिति' उद्देश्यप्रश्नः। 'शब्दोऽहमि'ति दोषायेत्यादि। 'अहमि'ति शब्दोऽयमात्मनि स्वप्रयोक्तरि वर्त्तमानो न दोषाय भवति। किन्तु अनात्मन्यात्मविज्ञानं भ्रमः। तथाऽऽत्मशब्दस्याऽप्यनात्मनि प्रयोगो भ्रान्तिलक्षण इत्यर्थः। 'एते जिह्वादयः' शब्दाभिव्यक्तिहेतवो नाऽहं कर्तृकत्वादशरीरत्वात् (?) अशरीरत्वाच्चाऽहमिति शब्द-विज्ञानयोरन्यदानयनमित्यर्थः।

तथा

[3]परमार्थस्तु भूपाल संक्षेपात् श्रूयतां मम।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः॥
जन्मबुध्यादिरहित आत्मा सर्वगतोऽव्ययः।
परज्ञानमयोऽसद्भिः नामजात्यादिभिर्विभुः॥
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यते।
तस्याऽऽत्मपरदेहेषु सतोऽप्येकतमं हि तत्॥
विज्ञानं परमार्थोऽसौ द्वैतनोऽतत्त्वदर्शिनः।
वेणुरन्ध्रविभेदश्च यथा षड्जादिसंज्ञितः॥
अभेदव्यापिनो[4] वायोस्तथा तस्य महात्मनः।

1 भावः इति उदयपुरमातृकायाम्.

2 असमीक्षकारी.

3 २, १४, २८.

4 अभेदयायिनो—A. S. B.

तथा

[1]श्रूयतां नृपशार्दूल यद्गीतमृभुणा पुरा ।
प्रतिबोधं जनयता निदाघस्य महात्मनः ॥
ऋभुर्नामाऽभवत्पुत्रो ब्रह्मणः परमेष्ठिनः ।
विज्ञाततत्वसद्भावो निसर्गादेव भूपते ॥
तस्य शिष्यो निदाघोऽभूत्पुलस्त्यतनयः पुरा ।
प्रादादशेषविज्ञानं स तस्मै परया मुदा ॥
अवाप्तज्ञानतत्वस्य न तस्याऽद्वैतवासना ।
स ऋभुस्तर्कयामास निदाघस्य नरेश्वरः ॥
देविकायास्तटे वीर नगरं नाम वै पुरम् ।
समृद्धमतिरम्यं च पुलस्त्येन निवेशितम् ॥
रम्योपवनपर्यन्ते स तस्मिन् पार्थिवोत्तम ।
निदाघनामा योगज्ञ ऋभुशिष्योऽवसत्पुरा ॥
दिव्यवर्षसहस्रे तु समतीतेऽस्य तत्पुरम् ।
जगाम स ऋभुः शिष्यं निदाघमवलोककः ॥
स तस्य वैश्वदेवान्ते द्वारालोकनगोचरे ।
स्थितस्तेन गृहीतार्घो निजवेश्म प्रवेशितः ॥
प्रक्षालिताङ्घ्रिपद्मं च कृतासनपरिग्रहम् ।
उवाच स द्विजश्रेष्ठो भुज्यतामिति सादरम् ॥

ऋभुरुवाच ।

भो विप्रवर्य भोक्तव्यं यदत्र भवतो गृहे ।
तत्कथ्यतां कदन्नेषु नः प्रीतिः सततं मम ॥

1 २, १५, २.

निदाघ उवाच ।

सक्तु [1]यावकवाद्यानामपूपानां च मे गृहे ।
यद्रोचते द्विजश्रेष्ठ तद्भक्षय यथेच्छया ॥

ऋभुरुवाच ।

कदन्नानि द्विजैतानि मिष्टमन्नं प्रयच्छ मे ।
संयावपायसादीनि द्राक्षाफाणितवन्ति च ॥

निदाघ उवाच ।

हे हे शालिनि मद्गेहे यत्किंचिदतिशोभनम् ।
भक्ष्योपसाधनं मिष्टं तेनाऽस्याऽन्नं प्रसाधय[2] ॥
इत्युक्ता तेन सा पत्नी मिष्टमन्नं द्विजस्य तत्[3] ।
प्रसाधितवती तस्य भर्त्तुर्वचनगौरवात् ॥
तं भुक्तवन्तमिच्छातो मिष्टमन्नं महामुनिम् ।
निदाघः प्राह भूपाल प्रश्रयावनतः स्थितः ॥
अपि ते परमा तृप्तिरुत्पन्ना तुष्टिरेव च ।
अपि ते मानसं स्वस्थमाहारेण कृतं द्विज ॥
क्वनिवासो भवान्विप्र क्व वा गन्तुं समुद्यतः ।
आगम्यते वा भवता यतस्तच्च द्विजोच्यताम् ॥

ऋभुरुवाच ।

क्षुद्यस्य तस्य भुक्तान्ने[4] तृप्तिर्ब्राह्मण जायते ।
न मे क्षुन्नाऽभवत्तृप्तिः कस्मान्मां द्विज पृच्छसि ॥

1 यावकवाव्यातां—A. S. B.

2 प्रसादय for प्रसाधय—A. S. B.

3 यत् for तत्.—A. S. B.

4 भुक्तेन्ने—A. S. B. makes a better reading.

वह्निना पार्थिवे धातौ क्षयिते क्षुत्समुद्भवः ।
भवत्यम्भसि[1] च क्षीणे नृणां तृप्ति[र्न]जायते ॥
क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज ।
ततः क्षुत्संभवाभावात्तृप्तिरस्त्येव मे सदा ॥
मनसः सुस्थता तुष्टिश्चित्तधर्मो न मे द्विज ।
चेतसो ये तु[2] तत्प्रश्न पुमानेभिर्न युज्यते ॥
क्व निवासस्तवेत्युक्तं क्व गन्ताऽसि च यः त्वया ।
कुतश्चाऽऽगम्यते ह्यत्र त्रितयेऽपि निबोध मे ॥
पुमान् सर्वगतो व्यापी आकाशवदयं यतः ।
कुतः कुत्र क्व गन्ताऽसि ते तदप्यर्थवत्कथम् ॥
नाऽहं गन्ता न वाऽऽगन्ता[3] नैकदेशनिकेतनम् ।
त्वं चाऽन्ये च न च [4]त्वं नं नाऽन्येऽन्येवाऽहमप्यहम् ॥
मिष्टान्नमिष्टमित्येषा जिज्ञासा मे कृता तव ।
किं वक्ष्यसीति तत्राऽपि श्रूयतां द्विजसत्तम ॥
किमस्वाद्वथवा मिष्टं भुञ्जतोऽन्नं द्विजोत्तम ।
मिष्टमेव यदाऽमिष्टं तदेवोद्वेगकारणम् ॥
अमृष्टं जायते मृष्टं मृष्टादुद्विजते जनः ।
आदिमध्यावसानेषु किमत्र रुचिकारणम् ॥
मृन्मयं हि गृहं यद्वन्मृदा लिप्तं स्थिरं भवेत् ।
पार्थिवोऽयं यदा देहः पार्थिवैः परमाणुभिः ॥
यवगोधूममुद्गादि घृतं तैलं पयो दधि ।
गुडः फलादीनि तथा पार्थिवाः परमाणवः ॥

1 भवत्यांभसि for भवत्यभसि—A. S. B.

2 यस्य for यत्तु—A. S. B.

3 नचागन्ता for नावगन्ता—A. S. B.

4 त्वं त्वं for न च त्वं तं—A. S. B.

तदेतद्भवता ज्ञात्वा मिष्टाऽमिष्टविचारि यत् ।
तन्मना समतालम्बी कार्यं साम्यं हि मुक्तये ॥
इत्याकर्ण्य वचस्तस्य परमार्थान्वितं नृप ॥
प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ।
प्रसीद मद्धितार्थाय कथ्यतां कस्त्वमागतः ॥
नष्टो मोहस्समाकर्ण्य वचांस्येतानि वै द्विज ।

ऋभुरुवाच ।

ऋभुरस्मि तवाऽऽचार्यः प्रज्ञादानाय ते द्विज ।
इहाऽऽगतोऽहं यास्यामि परमार्थस्तवोदितः ॥
एकमेवमिदं ब्रह्मन्नभेदि सकलं जगत् ।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः ॥
तथेत्युक्तो निदाघेन प्रणिपानपुरस्सरम् ।
पूजितः परया भक्त्या इच्छातः प्रययौ ऋभुः ॥
[1]पुनर्वर्षसहस्रे तु समतीते नरेश्वर ।
निदाघज्ञानदानाय तदेव नगरं ययौ ॥
नगरस्य बहिः सोऽथ निदाघं ददृशे मुनिम् ।
महाबलपरीवारे पुरं विशति पार्थिवे ॥
दूरे स्थितं महाभागं जनसम्मर्दवर्जकम् ।
क्षुत्क्षामकण्ठमायान्तमरण्यात् ससमित्कुशम् ॥
दृष्ट्वा निदाघं स ऋभुरुपगम्याऽभिवाद्य च ।
उवाच कस्मादेकान्ते स्थीयते भवता द्विज ॥

निदाघ उवाच ।

भो विप्र जनसंमर्दो महानेष नरेश्वरे ।
प्रविविक्षौ पुरं रम्यं तेनाऽत्र स्थीयते मया ॥

1 २, १६, १.

ऋभुरुवाच ।

नराधिपोऽत्र कतमः कतमश्चेतरो जनः ।
कथ्यतां मे द्विजश्रेष्ठ त्वमभिज्ञो मतो मम ॥

निदाघ उवाच ।

योऽयं गजेन्द्रमुन्मत्तं अद्रिशृंगमिवोच्छ्रितम् ।
अधिरूढो नृपेन्द्रोऽयं परलोकस्तथेतरः ॥

ऋभुरुवाच ।

एतौ हि गजराजानौ युगपद्दर्शितौ मम ।
भवता न विशेषेण पृथक्चिह्नोपलक्षितौ ॥
तत्कथ्यतां महाभाग विशेषो भवताऽनयोः ।
ज्ञातुमिच्छाम्यहं कोऽत्र गजः को वा नराधिपः ॥

निदाघ उवाच ।

गजो योऽयमजो [1]ब्रह्मन्नुपर्यस्यैष भूपतिः ।
वाह्यवाहकसम्बन्धं को न जानाति वै द्विज ॥

ऋभुरुवाच ।

जानाम्यहं यथा ब्रह्मन् तथा मामवबोधय ।
अधश्शब्दनिगद्यं किं किं चोर्ध्वमभिधीयते ॥

ब्राह्मण उवाच ।

इत्युक्तस्सहसाऽऽरुह्य निदाघः प्राह तं ऋभुम् ।
श्रूयतां कथयाम्येष यन्मां त्वं परिपृच्छसि ॥
उपर्यहं यथा राजा त्वमधः कुञ्जरस्तथा ।
अवबोधाय ते ब्रह्मन् दृष्टान्तो दर्शितो मया ॥

1 अथो for अजो—A. S. B.

ऋभुरुवाच ।

त्वं राजवद्द्विजश्रेष्ठ स्थितोऽहं गजवद्यदि ।
तदेव त्वं समाचक्ष्व कतरस्त्वमहं तथा ॥

ब्राह्मण उवाच ।

इत्युक्तस्सत्वरस्तस्य प्रगृह्य चरणावुभौ ।
निदाघः प्राह भगवानाचार्यस्त्वं ऋभुर्ध्रुवम् ॥
नाऽन्यस्याऽद्वैतसंस्कारसंस्कृतं मानसं तथा ।
यथाऽऽचार्यस्य तेन त्वां मन्ये प्राप्तमहं गुरुम् ॥

ऋभुरुवाच ।

तवोपदेशदानाय पूर्वशुश्रूषयाऽऽहृतः ।
गुरुस्तेऽहमृभुर्नाम निदाघ समुपागतः ॥
तदेतदुपतिष्ठन्ते संक्षेपेण महामते ।
परमार्थसारभूतं यत् तदद्वैतमशेषतः ॥

ब्राह्मण उवाच ।

एवमुक्त्वा ययौ विद्वान् निदाघं स ऋभुर्गुरुः ।
निदाघोऽप्युपदेशेन तेनाऽद्वैतपरोऽभवत् ।
सर्वभूतान्यभेदेन ददृशे स तदात्मनः ॥

तथा

परब्रह्मपरो मुक्तिमवाप परमां द्विजः ।
तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबान्धवः ॥
भव सर्वगतं जानन्नात्मानमवनीपते ।
सितनीलादिभेदेन यथैकं दृश्यते नभः ॥
भ्रान्तदृष्टिभिरात्माऽपि तथैकस्सन् पृथक् पृथक् ।

एकः समस्तं यदिहास्ति किंचित्
तदच्युतो नास्त्यपरं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ॥

तथा प्रह्लादचरिते[1]

प्रह्लाद उवाच ।

ममोपदिष्टं सकलं गुरुणा नाऽत्र संशयः ।
गृहीतं च मया किं तु न सदेतन्मतं मम ॥
साम चोपप्रदानं च भेददण्डौ तथाऽपरौ ।
उपायाः कथिता ह्येते मित्रादीनां च साधने ॥
तदहं च न पश्यामि मित्रादींस्तात मा क्रुधः ।
साध्याभावे महाबाहो साधनैः किं प्रयोजनम् ॥
सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥
त्वय्यस्ति भगवान्विष्णुर्मयि चाऽन्यत्र चाऽस्ति सः ।
यतस्ततोऽयं मित्रं मे शत्रुर्वेति पृथक् कुतः ॥
तदेभिरलमत्यर्थं दुस्तरे[2] तूक्तिविस्तरे ।
अविद्यान्तर्गतैर्यत्नः कर्तव्यस्तात शोभने ॥
विद्या बुद्धिरविद्यायामज्ञानात्तात जायते ।
बालोऽग्निं किं न खद्योतमसुरेश्वर मन्यते ॥
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायाऽपरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥

1 विष्णुपुराण, १, १९, ३४—४९.
2 दुष्टारम्भोक्तिविस्तरैः—मु. पु., पृ. १०६.

तदेतदवगम्याऽहमसारं सारमुत्तमम् ।
निशामय महाभाग प्रणिपत्य ब्रवीमि ते ॥
न चिन्तयति को राज्यं को धनं नाऽभिवाञ्छति ।
तथाऽपि भाव्यमेवैतदुभयं प्राप्यते नरैः ॥
सर्व एव महाभाग महत्त्वं प्रति सोद्यमः ।
तथाऽपि पुंसां भाग्यानि नोद्यमा भूतिहेतवः ॥
जनानामविवेकानामशृण्वानामपि प्रभो ।
भाग्यभोगानि राज्यानि सन्त्यनीतिमतामपि ॥
तस्माद्यतेत धर्माय[1] यदीच्छेन्महतीं श्रियम् ।
यतितव्यं [2]समत्वेन निर्वाणमपि चेच्छता ॥
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥
एतद्विजानता सर्वं जगत्स्थावरजंगमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥
एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
[3]प्रसीदति ततस्तत्र प्रसन्ने क्लेशसंक्षयः ॥

1 पुण्येषु—मु. पु.
2 समत्वे च—मु. पु.
3 प्रसीदत्यच्युतः तस्मिन्.

॥ २४ ॥

# अथ योगभ्रष्टगतिः

नत्र महाभारते[1]

अर्जुन उवाच ।

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छनि ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥
एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्याऽस्य छेत्ता न ह्युपपद्यते ॥

श्रीभगवानुवाच ।

पार्थ नैवेह नाऽमुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥
अथवा योगिनामेव कुले भवति श्रीमताम्[2] ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥

1 भगवद्गीता—६, ३७-४५.
2 'धीमतां' इति भाष्यकाराः पठन्ति.

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥
पूर्वाभ्यासेन तेनैव ह्रियते[1] ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्माऽतिवर्तते ॥
[2]प्रसन्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥

विष्णुपुराणे

[3]योगयुक् प्रथमं योगी युंजानस्त्वभिजाग्रते ।
विनिष्पन्नसमाधिस्तु परं ब्रह्मोपलब्धिमान् ॥
यद्यन्तरायदोषेण मुच्यते नरमानसम् ।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्वैव जायते ॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ॥

1 क्रियते हि अवशोऽपि सः— A. S. B.

2 प्रयत्नाद्यतमानस्तु—A. S. B., स. ना. भाष्यकाराश्च.

3 ६, ७, ३३–३५.

॥ २५ ॥

# अथाऽरिष्टानि[1]

तत्र देवलः

[2]अथाऽरिष्टं प्रवक्ष्यामि यथावद्योगकर्मणि ।
यथोक्तमृषिभिः पूर्वमायुर्विज्ञानमादितः ॥
अरुन्धतीं ध्रुवं चैव सोमच्छायां महापथम् ।
यो न पश्येन्न जीवेत्स द्विज संवत्सरात्परम् ॥
अरश्मिमन्तमादित्यं रश्मिमन्तं च पावकम् ।
यो न पश्येन्न जीवेत्स [3]मासमेकादशात्परम् ॥
रुक्मशाखान् द्रुमान् दृष्ट्वा गन्धर्वनगराणि च ।
पश्येत् प्रेतान् पिशाचांश्च दश मासान् स जीवति ॥
सदा मूत्रं पुरीषं वा सुवर्णरजतप्रभम्[4] ।
प्रत्यक्षं यदि वा स्वप्ने नव मासान् स जीवति ॥
अकस्माद्वा भवेत् स्थूलो योऽकस्माद् वा भवेत्कृशः ।
प्रकृते विकृतो यो वै सोऽष्ट मासांस्तु जीवति ॥
पांशुस्थं कर्दमे वाऽपि यस्य खण्डं पदं भवेत् ।
अग्रतः पृष्ठतो वाऽपि सप्त मासान्स जीवति ॥

1 अथ अरिष्टाणि—A. S. B.; अनिष्टमिति उदयपुरकोशम्.

2 अरिष्टं—*Ib.*

3 मासादेकदशात्परम्—*Ib.*

4 प्रभे for प्रभम्—A. S. B.

काकः कपोतो गृध्रो वा विलीनो यस्य मूर्द्धनि ।
क्रव्यादाः पक्षिणश्चैव षण्मासान्स तु जीवति ॥
मृदिते वायुवर्षेण पांसुवर्षेण वा पुनः ।
छायां वा विकृतां पश्येत् पञ्च मासान् स जीवति ॥
अभेद्यां विद्युतं पश्येत् दक्षिणां दिशमाश्रिताम् ।
मासान् स चतुरो जीवेद्योगी तत्र न संशयः ॥
रक्तगन्धाम्बरः स्रग्वी गच्छेद्वा दक्षिणामुखः ।
खरोष्ट्रमपि चाऽऽरोहेत् त्रीन्मासान्नाऽतिजीवति ॥
जले चेन्द्रधनुर्वाऽपि यदि पश्येन्नरोऽहनि ।
[1]मासद्वयेन म्रियते नास्ति तत्र विचारणा ॥
[2]यस्य वै स्नातमात्रस्य उरू पादौ च शुष्यतः ।
[3]अप्सु वा यदि वाऽऽदर्शे च्छायां पश्यति नाऽऽत्मनः ॥
छायां वा विकृतां पश्येन्मासमेकं स जीवति ।
[4]मस्तके वा भवेद्धूमोऽर्द्धमासं स तु जीवति ॥
शवगन्धं भवेद्गात्रं दन्तसादोऽपि यस्य च ।
दृष्ट्वाऽऽत्मानं मृतं स्वप्ने द्वादशाहं स जीवति ॥
यस्य कृष्णौ करौ जिह्वा पद्माभासं च वै मुखम् ।
गण्डे च पिटका रक्ताः स जीवेच्चतुरो दिनान् ॥
मारुतो यस्य गात्रेषु परं मर्माणि कृन्तति ।
जीवेत्त्र्यहं तु विप्रः सन् संदेहश्च ततो[5] भवेत् ॥
अद्भिः स्पृष्टो न हृष्येत सोऽहनी द्वे च जीवति ।

1 A. S. B., ना. and स. supply this line.

2 A. S. B. omits this line.

3 स. and ना. omits two lines here.

4 A.S.B. omits this line and the next, and supplies it as an addition

5 तथा for ततः—A. S. B., स. and ना.

घोषं [1]न श्रृणुयात्कर्णे ज्योतिर्नेत्रे न पश्यति ।
सद्योजीवः स वै विप्रः शुभकर्माणि कारयेत् ॥

वायुपुराणे

[2]ऋक्षवानरयुक्तेन रथेनाऽऽशां तु दक्षिणाम् ।
गायन्नथ व्रजेत्स्वप्ने विद्यान्मृत्युमुपस्थितम् ॥
कृष्णाम्बरधरा श्यामा गायन्ती वाप्यथाऽङ्गना ।
यं नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥
छिद्रं वासश्च कृष्णं च स्वप्ने यो बिभृयान्नरः ।
नग्नं वा श्रमणं दृष्ट्वा विद्यान्मृत्युमुपस्थितम् ॥

'श्रमणः' क्षपणकः ।

आमस्तकतलाद्यस्तु निमग्नः पङ्कसागरे ।
दृष्ट्वा तु तादृशं स्वप्ने सद्य एव न जीवति ॥
भस्मांगारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान् ।
पश्येद्यो दशरात्रं तु न च जीवति तादृशः ॥
कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताड्यते स्वप्ने यः स सद्यो न जीवति ॥
सूर्योदये प्रत्युषसि प्रत्यक्षं यस्य वै शिवाः[3] ।
क्रोशंत्यभिमुखाऽभ्येति स गतायुर्भवेन्नरः ॥
यस्य वै भुक्तमात्रस्य हृदयं बाध्यते क्षुधा ।
जायते दन्तवर्षं च तं गतायुषमादिशेत् ॥
भूयोभूयस्त्रसेद्यस्तु रात्रौ वा यदि वा दिवा ।

1 घोरं for घोषं—A. S. B., स. and ना.

2 १९, १३.

3 शिराः for शिवाः—A. S. B.

दीपगन्धं च नाऽवैति विद्यान्मृत्युमुपस्थितम् ॥
रात्रौ चित्राम्बरं पश्येद्दिवा नक्षत्रमण्डलम् ।
परनेत्रेषु चाऽऽत्मानं न पश्येन्न स जीवति ॥
नेत्रमेकं स्रवेद्यस्य कर्णौ नासा च भ्रश्यते ।
नासा च वक्रा भवति स ज्ञेयो गतजीवितः ॥
यस्य कृष्णा खरा जिह्वा पद्माभासं च वै मुखम् ।
गण्डयोः पिटके रक्ते तस्य मृत्युरुपस्थितः ॥

## मार्कण्डेयपुराणे

[1]यस्य गर्ते पतितस्य स्वप्ने भावो निधीयते ।
न चोत्तिष्ठति वै श्वभ्रात्तदन्तं तस्य जीवितम् ॥
उर्द्ध्वा च दृष्टिर्न च संप्रतिष्ठा
रक्ता पुनः संपरिवर्तमाना ।
मुखस्य चोष्मा सुषिरा च नाभिः
शंसन्ति पुंसामपरं शरीरम् ॥
स्वप्ने ऽग्निं प्रविशेद्यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवितम् ॥
[2]स्ववस्त्रममलं शुक्लं रक्तं पश्येत्तथाऽसितम् ।
यः पुमान् मृत्युमासन्नं तस्याऽपि हि विनिर्दिशेत् ॥
स्वभाववैपरीत्यं च प्रकृतेस्तु विपर्ययः ।
कथयन्ति मनुष्याणां तदाऽऽसन्नौ यमान्तकौ ॥
येषां विनीतः सततं येऽस्य पूज्यतमाः स्मृताः ।
तानेव चाऽवजानाति तानेव च विनिन्दति ॥

1 ४३, २९-३९.
2 वा for च—A. S. B.

देवता नार्चति वृद्धान् गुरून् विप्रांश्च निन्दति ।
मातापित्रोरसत्कारं जामातॄणां करोति च[1] ॥
योगिनां ज्ञानविदुषामन्येषां च महात्मनाम् ।
प्राप्ते तु काले पुरुषस्तद्विज्ञेयो विचक्षणैः[2] ॥

ब्रह्मपुराणे

यदा च[3] कृष्णाम्बरपीतवर्णं
ब्रह्मद्वारे कृकलासं प्रपश्येत् ।
तदा तच्छरीरं प्रजहाति बालं
[4]च त्व नाथे रभया दरण्ये ? ॥
सूर्योदये चाऽस्तमये निशायां
चन्द्रच्छाया मस्तकेष्यवोतस्तु[5] ।
आत्मच्छायां बाहुदण्डौ प्रसार्य
दृष्ट्वा कबन्धं प्रजहाति देहम् ॥
पश्यंश्च तां दक्षिणबाहुहीनां
विसर्जयेद्भ्रातरमग्रभूतम् ।
पश्यंस्तु तां वामभुजोज्झितांच
पुत्रौ दारांश्चाऽथ विवर्जयेत्[6] ।
अरुन्धतीं न पश्यन्ति दृष्टपूर्वां कथञ्चन ।
तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च ॥

1 ४३, ३३-३७.
2 तद्विज्ञेयं विचक्षणैः—ना. स. and A. S. B.
3 यदावकृष्णां च—A. S. B.
4 *It* is also defective.
5 Has चन्द्रश्चयामथवो—तस्तु—*Ibid.*
6 The end is defective in both mss.

खण्डपादं दक्षिणतस्ते हि संवत्सरायुषः ।
परचक्षुषि चाऽऽत्मानं ये न पश्यन्ति पार्थिव ॥
आत्मच्छायाकृतिं चैव तेऽपि संवत्सरायुषः ।
अतिद्युतिररतिप्रज्ञाऽप्रज्ञा वाऽद्युतिस्तथा ॥
प्रकृतेर्विक्रियापत्तिः षण्मासान्मृत्युलक्षणम् ।
दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते ॥
कृष्णश्यावच्छविच्छायः षण्मासान्मृत्युलक्षणम् ।
शीर्णनाभिर्यथाचक्रं छिद्रं सोमे प्रपश्यति ॥
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ।
शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः ॥
देवतायतनस्थश्च षड्रात्रेण स मृत्युभाक् ।
कर्णनासाविचलनं दन्तस्पृष्टिर्विरागिता ॥
संज्ञालोपो निरूष्मत्वं[1] सद्योमृत्युनिदर्शनम् ।
अकस्माच्च स्फुरेद्यस्य वाममक्षि नराधिप ॥
मूर्ध्नश्चोत्पद्यते धूमः सद्योमृत्युनिदर्शनम् ।
एतावन्ति त्वरिष्टानि विदित्वा नर आत्मवान् ॥
निशिरात्मनि? आत्मानं योजयेत् परमात्मनि ।
प्रतीक्षमाणः तत्कालं यत्कालं प्रति तद्भवेत् ॥
[2]यथाऽस्य नेष्टं मरणं स्थातुमिच्छेदिमां क्रियाम् ।
सर्वगन्धान्रसांश्चैव धारयेत्तु समाहितः ॥
तथा मृत्युमुपादाय तत्परेणाऽन्तरात्मना ।
आधाय धारणांचैव विदित्वा मनुजर्षभ ॥

1 निरुष्यात्वं—A. S. B. The correct reading is probably निरुष्णत्वम्.
2 अथास्य for यथास्य—स. ना. *Ibid.*

[1]जयेत मृत्युयोगेन योगिना परमात्मना[2]।
गच्छेत्प्राप्य क्षयं कृष्णमजन्म शिवमव्ययम्।
शाश्वतं स्थानमचलं दुष्प्राप्यमकृतात्मभिः ॥

तथा

आपन्ने तूत्तरां काष्ठां सूर्ये यो निधनं व्रजेत्।
नक्षत्रे च मुहूर्ते च पुण्ये राजन् स पुण्यकृत् ॥

1 तत्परात्मना—ना. and स.
2 यजेतमृत्युं योगेन—A. S. B.

॥ २६ ॥

# अथोत्क्रान्तिः

तत्र देवलः

त्यक्त्वा भयं विषादं च शुचिर्भूत्वा समाहितः ।
प्राचीं वा यदि वोदीचीं दिशं निष्क्रम्य वै द्विजः ॥
प्रागुदक्प्रवणे देशे समे निःस्थावरे शुचौ ।
द्विजस्तेनैव विधिना सोपदेशो धुतप्लवः ॥
शतमष्टशतं वाऽपि धारणां मूर्ध्नि धारयेत् ।

'निःस्थावरे' वृक्षादिरहिते ।

खिन्नस्य धारणाभिस्तु वायुरूर्द्ध्वं तनो व्रजेत् ।
त्यक्तोङ्कारमयो योगी अक्षरस्त्वक्षरी भवेत् ॥
एवं निर्वाणमाप्नोति योगी योगपरायणः ।
दृष्टारिष्टो यतिश्रेष्ठो योगी ध्यानपरो भवेत् ॥
त्यक्त्वा कलेवरं ध्यायन् परं याति महेश्वरम् ।
एकान्तात्यन्तकं सांख्यं परं ब्रह्म सनातनम् ॥
जन्ममृत्युजराव्याधिभयासङ्गविवर्जितम् ।
देवैर्मुनिगणैर्वाऽपि दुर्गमं दुरतिक्रमम् ॥
उपगच्छति तत्वज्ञो योगी तद्गतमानसः ॥

## मार्कण्डेयपुराणे

[1]दृष्ट्वाऽरिष्टं ततो योगी त्यक्त्वा मरणजं भयम् ।
तत्स्वभावं तदाऽऽलोक्य काले यावदुपागते ॥
तस्य भागे तथैवाह्नो योगं युञ्जीत योगवित् ।
पूर्वाह्णे चाऽपराह्णे वा मध्याह्णे वा दिने दिने ॥
यत्र वा रजनीभागे तदरिष्टं निरीक्षितम् ।
तत्रैव तावद्युंजीत यावत्प्राप्तं हि तद्दिनम् ॥
ततस्त्यक्त्वा भयं सर्वं जित्वा तं कालमात्मवान् ।
तत्रैवाऽऽवसथे स्थित्वा यत्र वा स्थैर्यमात्मनः ॥
योगी युंजीत निर्जित्य त्रीन् गुणान् परमात्मनि ।
तन्मनाश्चात्मना भूत्वा चित्तवृत्तिं त्यजेद्बुधः ॥
ततः परमनिर्वाणं अतीन्द्रियमगोचरम् ।
यद्बुद्धेर्यन्न चाऽऽख्यातुं शक्यते तत्समश्नुते ॥

## [2]महाभारते

भगवानुवाच ।

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥
[3]यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥
तस्मात्सर्वेषु कालेषु मामनुस्मर बुध्य च[4] ।

1 ४३, ४१–४६.

2 भगवद्गीता—८, ५–१५.

3 Omitted in A. S. B.

4 युध्य च इति भाष्यकाराः पठन्ति : सुब्रत—स. ना

मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ।
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थाऽनुचिन्तयन् ।
कविं पुराणमनुशासितारं
अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपं
आदित्यवर्णं तमसः परस्तात् ॥
प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥
यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥
अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याऽहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥

मनुः[1]

नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहात् प्रमुच्यते ॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माऽभ्येति सनातनम् ॥

महाभारते

विमुच्यमानः पापेभ्यो वनेभ्य इव चन्द्रमाः ।
विरजाः कालमाकांक्षन् धीरो धैर्येण सिध्यति ॥

अथार्चिरादिमार्गः

तत्र याज्ञवल्क्यः[2]

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ।
सितासिताः कद्रुनीलाः[3] कपिलाः पीतलोहिताः ॥
उर्ध्वमेकः स्थितस्तेषां यो भित्वा[4] सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥
यदस्याऽन्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् ।
तेन देवशरीराणि स धामानि प्रपद्यते ॥
येनैकरूपाश्चाऽधस्ताद्रश्मयोऽस्य मृदुप्रभाः ।
इह कर्मोपभोगाय तैः संसरति सोऽवशः ॥

1 ६, ७८–७९.
2 ३, १६६–१६९.
3 कर्बुरुपाः इति पाठान्तरम्.
4 योगी तु आसूर्यमण्डले—A. S. B.

महाभारते

पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ।
जङ्घाभ्यां तु वसून्देवानाप्नुयादिति नः श्रुतम् ॥
जानुभ्यां तु महाभागान् सर्वसाध्यानवाप्नुयात् ।
पृथिवीं जघनेनाऽथ ऊरुभ्यां च प्रजापतिम् ॥
पार्श्वाभ्यां मरुतो देवान् नागाद्यातीन्दुमेव च ।
बाहुभ्यामिन्द्रमित्याहुरुरसा रुद्रमेव च ॥
ग्रीवायास्तमृषिं देव नित्यमाप्नोत्यनुत्तमम् ।
विश्वान् देवान् मुखेनाऽथ विश्वान् श्रोत्रेण चाप्नुयात् ॥
घ्राणेन [चैव[1] तान्सर्वा]न्नेत्राभ्यां सूर्यमेव च ।
भ्रूभ्यां चाऽप्यश्विनौ देवौ ललाटेन पितॄनथ ।
ब्रह्माणमाप्नोति विभुं मूर्ध्ना देवाग्रजं तथा ॥

याज्ञवल्क्यः[2]

स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥
य एवमेनं विन्दन्ति ये चारण्यकमाश्रिताः ।
उपासते द्विजाः सत्यं श्रद्धया परया युताः ॥
क्रमात्ते संभवन्त्यर्चिरहः शुक्लं[3] तथोत्तरम् ।
अयनं देवलोकं च सवितारं सवैद्युतम् ॥
तत्रस्थान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् ।
करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥

1 The elision is in Udaipur and A. S. B. Mss. and is supplied from ना.

2 ३, १९१-१९७.

3 शुक्तं for शुक्लं—A. S. B.

यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः ।
धूमं [1]रात्रिं कृष्णपक्षं दक्षिणायनमेव च ॥
पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम् ।
क्रमात्ते संभवन्तीह पुनरेव व्रजन्ति च ॥
एतद्यो न विजानाति मार्गद्वितयमात्मनः ।
दंदशूकः पतङ्गो वा भवेत्कीटोऽथवा कृमिः ॥

सकलाश्रमिभिः असौ परमात्मा नानाप्रकारं जिज्ञासितव्यः। तमेव प्रकारमाह—'द्रष्टव्यो' ऽपरोक्षी कर्तव्यः। तदुपायमाह 'श्रोतव्यो मन्तव्य' इति। 'श्रोतव्यो वेदान्तश्रवणेन निर्णेतव्यः। 'मन्तव्यो' युक्तिभिर्विचारयितव्यः। ततोऽसौ ध्यानेनाऽपरोक्षी भवति। ये द्विजातयः श्रद्धातिशययुक्ता आरण्यकं निर्जनप्रदेशमाश्रिताः 'एव'मुक्तेन मार्गेण 'एन' मात्मानं सत्यं ब्रह्मोपासते 'विन्दन्ति' लभन्ते प्राप्नुवन्ति। ब्रह्मप्राप्तिमार्गं देवयानमाह—'क्रमात्ते संभवन्तीति'। ते विदितात्मानः 'क्रमात्' अग्न्याद्यभिमानिदेवतास्थानेषु मुक्तिमार्गभूतेषु। [2]विप्रा पिताः परमं पदमाप्नुवन्ति। 'अर्चि'र्वह्निः। 'अह'र्दिनम्। 'शुक्लः' शुक्लपक्षः। 'उत्तरं' उत्तरायणम्। 'देवलोकम्' सुरसद्म। 'सविता' सूर्यः। 'तेजः तानेवंक्रमादर्चिरादिस्थानगतान् मानसः 'पुरुषो' ब्रह्मलौकिकान् करोति' ब्रह्मैव लोको ब्रह्मलोकः तं गमयति। परमात्मनैकी भवति। पितृयानमाह 'यज्ञे'नेत्यादि। 'ये पुन'रिति तैर्यज्ञदानतपोभिः स्वर्गफलभोक्तारः ते क्रमात्

1 निशाम् इति मिताक्षरपाठः

2 Lacuna here in all four Mss.

धूमादिपदार्थाभिमानिनीर्देवताः [1]प्राप्य पुनरेव वायुवृष्टिजलभूमीः प्राप्य व्रीह्याद्यनुरूपेण शुक्रत्वमवाप्य संसारिणो योनिं व्रजन्ति । 'दन्दशूकः' सर्पादिः[2] ।

महाभारते[3]

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥
नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवाऽर्जुन ॥
[4]वेदेषु यज्ञेषु तपस्सु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति [5]चाऽऽद्यम् ॥

'[6]अग्निः ज्योति'रिति [6]अर्चिर्देवता लक्ष्यते ।

1 प्राश्रमः which seems correct as प्राप्य comes later—A. S. B.

2 The explanation of Lakṣmidhara agrees with that described by Vedānta Des'ika in his परमपदसोपानम्.

3 भगवद्गीता— ८, २३-२८.

4 देवेषु यज्ञेषु—A. S. B.

5 वाद्यम् for चाद्यम्—*Ibid.*

6 Nagpur Ms. ends with अर्चिर्देवता.

तथा च श्रुतिः

अर्चिषोऽहः अह्न आपूर्यमाणपक्ष इति[1] ।
अहरादिपदैस्तदभिमानिन्यो देवता लक्ष्यन्ते ॥

तथा

सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवापि मार्गे मुह्यन्ति स्वपदस्य पदैषिणः ॥
यथागतिर्न दृश्येत तथैवाऽस्य महात्मनः ।

इति महाराजाधिराज श्रीमद्गोविन्दचन्द्र[2] महासन्धिविग्रहिकेण श्रीहृदयधरात्मजेन श्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ मोक्षकाण्डं समाप्तम्[3] ।

1 बृहदारण्यकोपनिषत्, ६, १५ :—"तेऽर्चिरभिसम्भवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षण्मासान् उदङ् आदित्य एति ॥" इति.

2 A. S. B. inserts देव here.

3 A. S. B. gives the date of its transcription as संवत् १९५०, आश्वि. शु, ९. बु--काश्यां लिखितम्—[*i.e.*, 1892 A. D.].

"इति श्रीमहाधिराजाधिराज श्रीमद्गोविन्दचन्द्रदेव महासान्धिविग्रहिकेण श्रीहृदयधरात्मजेन श्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ मोक्षकाण्डमू समाप्तमू । संवत् १७२१. In Sarasvatibhavan Ms. संख्यग्रन्थाः २६५०.

## INDEX OF AUTHORS AND WORKS CITED IN THE TEXT

** An asterisk indicates that the passage referred to is in prose.*

## INDEX OF AUTHORS AND WORKS CITED *ONLY* IN THE FOOT NOTES

# INDEX OF HALF-VERSES

** Prose citations. ** Citations in foot-notes. References are to pages.*

## अ

## आ

इ

ई



उ

ऊ

### ख



### ग

घ



च

## प

म

### य

ह

# NOTES

[*N. B. Figures in thick type refer to the pages of the* Mokṣakāṇḍa, *and in thin type to lines on the page.*]

**5**, 3 ff. Lakṣmīdhara's conception of *Mokṣa* is stated here. To him it means "oneness with Brahman" (*Brahm aṇā saha aikyam*), after *ajñāna* or *avidyā* ceases through knowledge in the form of the final intuition of Brahman. This view is not negative like that of the Sāṃkhya-Yoga (absolute dissociation of *Puruṣa* from *Prakṛti* or the Guṇas, vide *Yogasūtra*, IV, 34). As Lakṣmīdhara admits neither the intuition of the indeterminate nor the *eternal* distinction of *jīva* and *Brahman*, his view of *Mokṣa* does not accord with either the *Advaitic* or the *Vis'iṣṭādvaitic*. *Mukti* is said to consist in the absorption of the *jīva* in *Brahman* (*aikya*, *laya*, or *tanmaya*). This is the view of Bhāskara. See P. N. Srinivasachari, *Philosophy of Bhedābheda*, 1934, pp. 150-152:—" Bhāskara is not in favour of identity or inseparability but is inclined to interpret *mukti* as self-expansion and *ekībhava* or oneness with the absolute."

**5**, 7. To Lakṣmīdhara *avidyā* or *ajñāna* is that kind of knowledge which is opposed to *true* knowledge; i.e. it is the thinking of something as what it is not, *e.g.*, the non-eternal as the eternal, pain as pleasure, what does not belong to the self as belonging to it and the impure as the pure. See the last three lines of the passage from the *Brahmāṇḍapurāṇā* quoted on p. 124 of the *Mokṣakāṇḍa*. The view (and the illustrations in the above passage) are identical with *Yoga-sūtra*, II, 5:

**6**, 7-9. Cf. *S'rībhāgavata*, III, 29, 13:

सालोक्यं सार्ष्टि सामीप्य सांरूयमेकत्वमच्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥

**6**, 18. The rendering of *upasampadya* as *bhūtvā* marks a point of difference from *Vis'istādvaita*. Raṅgarāmānuja in his *Vis'iṣṭādvaidic* commentary on the *Chāndogyopaniṣad*, p. 577 (Anandās'rama edition) renders *upasamadya* by *prāpya*.

**7**, 2. "(On the soul's) having approached (the highest light) there is manifestation; (as we infer) from the word 'own.'" (*S'rībhāṣya*, E. T., Thibaut). S'aṅkara has 'entered into' instead of Ramūnuja's 'approached,' and adds 'of its own nature' as a qualification of 'manifestation.'

**7**, 4-5. Vedānta Des'ika uses this passage from *Viṣṇupurāna* in support of the *Vis'iṣṭādvaita* view of *Mokṣa,* that he expounds in his *Rahasyatrayasāra,* xxii. He interprets *bheṣajam* as *Bhagavat-svarūpam bhogyam.*

**7**, 13. cf. Sāṃkhyasūtra, *Atyantiko duḥkhanvṛttiḥ mokṣah.*

**7**, 14. *Mokṣaprakās'a* reads *upādhivilaya* for *upādhinilaya.*

**7**, 14-15. This statement is in accord with the view of Bhāskara that *Brahman* conditioned by *upādhi* is *jīva.* (*Bhāskarabhāṣya,* II, iii, 43 : *Upādhyavaccinna ananyabhūtasya vācakoyam s'abdaḥ.*) See Srinivasachari, *Philosophy of Bhedābheda,* ch. VI, pp. 84-96.

**8**, 5. *Sāyujya* or intimate union with the Supreme Being, which implies *mokṣa* ("*Mokṣo nāma sāyujyameva;*" Rāmānuja's *Gītā-bhāṣya,* p. 157, ed. Anandās'rama) is *not* what is meant here, but something similar to it.

**8**, 11. The quotation cannot be traced. *Mokṣaprakās'a* refers it to *Mahānāradīya.*

**9**, 7. *Mokṣaprakāsa* adopts the reading *yatiḥ* for *gatiḥ.*

**9**, 15. *Sāmya* literally means *sādharmya* or equality, which is a Vis'istādvaitic view. Lakṣmīdhara's preference to equating it with *ekatvam,* 'oneness,' shows his leaning to the view of Bhāskara. The analogies cited in the *purāṇa* passage (*jalam jalena-aikyam*) would support this conclusion.

**10**, 3. *tanmayatā,* oneness, identity.

**10**, 14. *Sametya,* 'having attained'.

**11**, 2. *Mokṣaprakās'a* reads *santoṣya* for *samyojya.*

**11**, 5-8. *Mukti* is readily available to the *vānaprastha,* and is therefore not the monopoly of the *sanyāsin,* as held by some extreme *Advaitins.*

**12**, 4-5. Compare *S'āntiparva,* 250, 26-27 (ed. Kumbakonam) :
आश्रमादाश्रम पुण्यं पूतो गच्छति कर्मभिः । अभयं सर्वभूतेभ्यो दत्वा यः प्रव्रजेद्द्विजः । लोकास्तेजोमयांस्तस्य प्रेत्य चानन्त्यमश्नुते ॥

**12**, 6-9. Compare *ibid.* 174, 6 :
वेदानधीत्य ब्रह्मचर्येण पुत्र पुत्रानिच्छेत् पावनार्थं पितॄणाम् । अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत् ॥

**12**, 13-14. Compare *Manusmṛti,* VI, 2 :
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥

According to *Mokṣaprakās'a,* the birth of a son's daughter or of a daughter's son will not qualify :
'अपत्यस्यापत्यं पौत्रमित्याहुः शिष्टाः' ।

The *Mitākṣara* view that the appearance of grey hair and the birth of a grandson are alternative qualifications is thus condemned by the *Mokṣaprakās'a* :

अत्र वलीपलितवान् जातपौत्रश्चेति विकल्पोक्तो विज्ञानेश्वरेण। तत्र वाशब्दाभावात उत्पन्नकर्मानुवादेन पदार्थद्वयविधाने वाक्यभेदात। उभाभ्यां च यो विशेषो लक्ष्यते 'जातपुत्रः कृष्णकेशीऽग्नी आदधीत' इतिवदिति केचित ॥ (मो. प्र. १६).

**12**, 16. Aparārka takes *Brāhmaṇa* to mean only *dvija*. Mitramis'ra dissents.

**13**, 17. 'ब्रह्मचारी' मैथुनत्यागी इति सपत्नीको व्रजेदिति अपरार्केऽभिधानात् (मो. प्र., १६).

**17**, 6. Bühler is wrong in taking the morning and evening baths as alternatives : both are obligatory.

**17**, 6. चीर may mean a tattered garment (Bühler) or a dress of bark, *Kus'a* etc.

**17**, 8. फालकृष्ट, produced by cultivation, or on ploughed land ; cf. कृष्टं च परिवर्जयेत् (p. 19).

**17**, 10. दान्तः, 'free from pride' (Medhātithi)

**17**, 13. योगतः, 'according to Law' (Medhātithi) ; 'at the proper time' (Kullūka).

**17**, 14. ऋक्षेष्टि is a sacrifice to the lunar mansions.

**17**, 15. For the *Dākṣāyana* see *Ās'valayana S'rautasūtra*, II, 14.

**19**, 4-7. Note the consideration for plant life.

**20**, 10. Kṛṣṇapaṇḍita (commentator on *Vāsiṣṭhasmṛti*) adopts the reading श्रावणकेन, like Lakṣmīdhara.

**22**, 5 ff. The elaborate classification of Vānaprasthas should be compared with the brief indication of four classes of Sanyāsins on p. 32, ll. 18-19. This is probably intentional (vide note on p. 32).

**23**, 4. The insistence on the permission of the preceptor by Hārīta may be noted. A similar sanction for entering on *Sanyāsās'rama* is not mentioned, because Lakṣmīdhara regards the third stage as only leading to the fourth.

**24**, 16. उपस्पृशेत्त्रिषवणं, 'when he bathes at the three *Savanas* (Morning, noon and evening.') The *yati* must bathe thrice daily, whereas (*inf.* p. 17, 'सायं स्नायात् प्रगे तथा) the *vānaprastha* has to bathe only twice, missing the noon-bath.

**25**, 15. *Mokṣaprakās'a* (p. 30) reads त्रितपाः for शतपाः

**25**, 19. *Mokṣaprakās'a* (p. 30) reads तनूदरकरा। for तथोदरसना

**26**, 9-10, cf. p. 46 *inf.*, ll. 1-2, and *Adiparva*, 124, 15—
वास्येकं तक्षतो बाहुं चन्दनेनैकमुक्षतः। नाऽकल्याणं न कल्याणं चिन्तयन्नुभयस्तयोः ॥

**26**, 14-15. Three intervening lines are omitted between the two-halves from the *Viṣṇupurāṇa*, which have been formed into a *s'loka* in the text. They are—तद्वत् त्रिसवनं स्नानं शस्तमस्य नरेश्वर ॥ देवताभ्यर्चनं होमः सर्वाभ्यागतपूजनम् । भिक्षाबलिप्रदानञ्च शस्तमस्य नरेश्वर ॥

**26**, 17. पार्श्वोर्ध्वनिर्गम् should read पार्श्वोर्ध्वबाहू.

**27**, 17. *Mokṣaprakās'a* (31-32) defends thus the opening of *mokṣa* straight to the hermit:

ननु आत्मोपासने सन्यासिन एव अधिकारात् कथमेतदिति वाच्यम् । मुख्याधिकारत्वेऽपि गृहस्थादेरपि गौणाधिकारिकतयाः सा धनाध्यायसिद्धत्वात् ॥

The reference is to *Vedānta Sūtra*, III, 4, 48-49 (कृत्स्नभावात्तु गृहिणोपसंहारः ॥ मौनवदितरेषामपि उपदेशात् ॥). Lakṣmīdhara does not accept the view that *mukti* is open only to the *yati*.

**28**, 16-17. This is *mahāprasthāna*. See *inf.* p. 30.

**28**, 18. अन्यतमया, by other means, e.g., drowning, precipitating oneself from a cliff, starvation and self-cremation. Medhātithi, who gives the above interpretation, holds that the reference to the attainment of *Brahmaloka* is not to be taken as complete liberation.

Āpastamba (II, 23, 2) considers death by starvation a proper culmination to the life of a hermit. So do Jains.

**28**, 19. Mitramis'ra by this comment—gives an Advaitic turn to this line, while Lakṣmīdhara leaves it to be literally interpreted,

'ब्रह्मलोकस्य अनर्चिरादिमार्गेण कार्यब्रह्मप्राप्तिः, न तु नित्यब्रह्मप्राप्तिः ।' (मो. प्र. ३३).

**30**, 4. Medhātithi, whose interpretation Mitramis'ra stresses, (and Lakṣmīdhara ignores) holds that this should not be taken to mean that one should become a *yati* only after he attains the age of seventy-five. and the hermit also need not remain so for a full-quarter of his life. He relies, like Vijñānes'vara, on the *Jābālopaniṣad*, which Lakṣmīdhara ignores.

तपसि कृद्धे परिव्रजेत् । 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाबालोपनिषद्, ४) ॥ ब्रह्मचर्यं समाप्य गृही भवेत् । गृही भूत्वा वनी भवेत । वनी भूत्वा प्रव्रजेत । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निको वा । यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥

**31**, 12. Mitramis'ra also approves of *sanyāsa* immediately after *gārhasthya*. He reconciles the apparent conflict of authorities thus:

जन्मान्तरीयाश्रयधर्मानुष्ठानेन कषायपरिपाकात् ब्रह्मचर्यमेव वैराग्योत्पत्तिः तेन तथाऽपि सन्न्यासोऽनुष्ठेयः । (मो. प्र. ३६) ॥

**32**. Lakṣmīdhara does not provide for death-bed (*ātura*) *sanyāsa*, and the entry into *sanyāsa* of defectives, though he may have

been aware of the verse of Aṅgiras, cited by Mitramis'ra (मो. प्र. ३६) which allows such entry:

अन्धः पङ्गुर्दरिद्रो वा विरक्तः सन्यसेद्द्विजः । सर्वेषामपि वैराग्यं . . . . स तु विधीयते ॥

**36**, 17. As Lakṣmīdhara has rejected the reading "*Ekadaṇḍī tridaṇḍī vā*" on the ground that the commentator of Baudhāyana has rejected it as unauthentic (*apa-pāṭhaḥ*)—vide p. 38, 11, 14-16, "*vā*" in the text should be dropped, as a mistake of copyists.

It is noteworthy that this commentator was apparently unavailable to Vedānta Des'ika, who deals with the whole question of errors in *Sanyāsa-vidhi* (such as are also implicitly or explicitly condemned by Lakṣmīdhara) in the 64th *vāda* of his *S'atadūṣaṇi* (Vol. I, pp. 294-309, ed. P. B. Anantacharya, 1926). Vedānta Des'ika accepts the reading with "*vā*", which allows an option, but explains it away thus:

अथ स्यात्—"न चात ऊर्ध्वं शुक्लांबरं बिभृयात् एकदण्डी त्रिदण्डी वा" इति बोधायनादि वचनात्त्रिदण्डैकदण्डधारणयो र्विकल्प इति । भवत्वेवं, तथापि परमहंसस्य एकदण्डधारणयेव । इतरेषां त्रिदण्डधारणमेवेति नास्ति नियमः, अविशेषेण तेषां प्रसक्तेः । भवत्वेवं का नो हानिरिति चेत् नियमाभिमानहानिः । गुरुलघुनोस्तुल्यविकल्पानुपपत्तिं चात्र यादवप्रकाशादयः प्राहुः । अतो मुख्यामुख्यतयैवायं विकल्पस्स्यात् । तदेतद्भगवान् व्यासः स्पष्टयति—"त्रिदण्डधारणं शस्तम्" इति । बोधायनादिसामान्यवचनविकल्पितैकदण्डधारणं त्रिदण्डालाभाद्यापद्विषयता हारीत-मेधातिथिभ्यां व्यवस्थापिता । "त्रिदण्डं वैणवं सौम्यं सत्वचं समपर्वकम् । वेष्टितं कृष्णगोवालरज्ज्वा तु चतुरङ्गुलम् ॥ नष्टे जलपवित्रे च त्रिदण्डे वा प्रमादतः । एकन्तु वैणवं दण्डं पालाशं बैल्वमेव वा ॥ गृहीत्वा विचरेत्तावद्यावल्लभ्यं त्रिदण्डकम् । यत्नेनान्वेषयेन्नित्यमप्रमत्तः समाहितः" इति हारीतः ॥ मेधातिथिस्तु—"यावन्नास्यत्रयो दण्डास्तावदेकेन पर्यटेत्" इति । न चैतत्प्रक्रान्तत्रिदण्डधारणपुरुषविशेषविषयमिति नियन्तुं शक्यम्, "एकदण्डी त्रिदण्डी वा" इत्यस्यात्रापि तुल्यत्वनिश्चयाभावात् । यद्यपि च प्रथममेव कस्यचित् त्रिदण्डालाभादेकदण्डग्रहणं संभवति, तथापि न तत्र प्रक्रमपरिनियतिरङ्गीकर्तुं शक्या, अमुख्यत्वात् । "यावन्नस्युस्त्रयोदण्डास्तावदेकेन पर्यटेत्" इत्यस्य चाविशेषेण प्रक्रमेपि प्रवृत्तेः ।

Vedānta Des'ika then proceeds to support his position on three further grounds: (1) Vedic authority upholds the *tridaṇḍa*, whereas only smṛti authority is cited in support of the option to use an *eka-daṇḍa*; (2) Manu's authority supersedes by convention those of all other smṛtis, and what is opposed to his statement is to be rejected, and Manu is for *tridaṇḍa* only; and (3) a number of smṛtis (which he cites, *e.g.*, S'āndilya, Atri, Dattātreya, Dakṣa and Hārita) prescribe only the *tridaṇḍa*.

**36**, 18. cf. *Yogasūtra*, II, 302—तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥

**37**, 7-8. "अतो ब्राह्मणधर्म एव चातुराश्रम्यं इति सिद्धम्" (Medhātithi, ed. Jha, I, p. 533). Mitramis'ra, who cites with approval Lakṣmīdhara's verdict (मो. प्र. ४५), reproduces the elaborate discussion of the subject in the *Madanapārijāta* (*Bib. Ind.*, pp. 365-373) to establish the right of the Brāhmaṇa alone to *sanyāsa*.

**41**, 4. पक्वकषाय—one who has destroyed his worldly attachments.

**42**, 9. मो. प्र. ७५ reads निरासार्थं for निरासार्थं.

**43**, 7-8. Medhātithi takes the s'*loka* to mean that the *yati* should wander forth alone, after sending away the companion he had with him till then. Mādhavācārya points out that a *sanyāsin* having abandoned everything, before entering the *ās'rama*, has nothing left that can be given up, unless it be his *guru*, whom also he should leave so as to begin his lonely wandering, and he should do so if he is confident of being able to stand on his own knowledge. The *s'loka* is a clear prohibition of the *parivāra* with which many ascetics surround themselves.

**44**, 20-21. The *s'lokas* occur in *Matsyapurāṇa*, 148, 32-31, and are cited in the *Tīrthakāṇḍa*, p. 24. The duty to live in Kās'i till one dies is emphasized in a curious verse : अविमुक्ते यदा गच्छेत्कदाचित्कालपर्ययात् । अश्मना चरणौ भित्त्वा तत्रैव निधनं व्रजेत् ॥ (l. c. p. 16.)

**45**, 12. अवासा does not mean 'nude' and implies only 'covered with a skin or grass that has been nibbled by a cow,' as indicated by Vasiṣṭha (*inf.* p. 50 and p. 51).

**45**, 20. मुण्ड does not mean one whose hair is *completely* shorn. See p. 49 'शिखावर्जं मुण्डो वा',

**48**, 16. 'प्रतीकार' is 'remedy' for disease. The prohibition to undergo treatment in his illness seems to be in conflict with Baudhāyana's inclusion of medicine (औषध) among the eight things which do not infringe the *yati's* vows (p. 54). The implication is that the *yati* should not himself seek a *remedy*.

**49**, 12. The *yati* should utter no benediction and make no formal salutation, but simply utter 'Nārāyaṇa' when saluted or when he himself worships.

निराशीः स्यात् । नमस्कृतोऽपि आशिषं न प्रयुञ्जति । किं तु नारायणस्मरणं कुर्यात् ॥ "नमो नारायणायेति गृहस्थः प्रणमेद्यतिम् । ब्रूयुर्नारायणेत्येव यतयो ह्यभिवादिता:, इति ॥ भिक्षार्थमाशिषं न प्रयुञ्जीतेत्यन्ये ॥ 'निर्नमस्कार:'—नमस्कृतो न नमस्कुर्यात, किं तु नारायणं स्मरेदिति उक्तम् । भिक्षार्थं प्रणतिं न कुर्यादित्यन्ये ॥ (केशव वैजयन्ती)

The *yati* who proceeds to Gaya is enjoined not to make his obeisance to the *viṣṇupāda* there like others, but simply show his *daṇḍa*, (*Vāyupurāṇa*, cited in *Yatidharmasaṁgraha*, p. 106).

**50**, 17-20. Cited as from Atri in *Yatidharmasaṁgraha*, p. 24.

**51**, 1. 'There is no liberation for one devoted to grammatical studies.' This is opposed to the view of Patañjali that the study of grammar is obligatory to Brāhmaṇas as a *nitya-karma* (ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च । प्रधानं च षडङ्गेषु व्याकरणम् ।). Grammar should be studied for *mukti* (महता देवेन नः साम्यं यथा स्यात् इत्यध्येयं व्याकरणम् ।). Nāgoji Bhaṭṭa is of opinion that the four ṛks cited and explained by Patañjali show that the study of grammar enables one to attain *mokṣa* (P. S. S. Sastri, *Lectures on the Mahābhāṣya*, 1944, p. 40).

**51**, 1-4. Though couched in general terms, the condemnation is of the *yati* who devotes himself to grammar-teaching, aims at gathering a following, takes pride in his food and raiment and finds pleasure in the beautiful surroundings of his hermitage. The gathering of disciples and the giving of discourses (*vyākhyānam*) in order to obtain gains and adoration (*lābhapūjā-nimittam*) are forbidden on p. 56, 1, 5.

**53**, end of the page. The s'lokas are from the *S'āntiparva*, ch. 190, sl. 4-5.

**54**, 8. The printed text reads संभाषीत for संभावयेत्. Bühler takes the clause (S.B.E., II, p. 281) as a prohibition of all conversation with women.

**55**, 4. The printed text interposes एव between शत्रयेव and आशरीर.

**55**, 10-16. Compare these with p. 166, ll. 2-5.

**55**, 19-20, and p. **56**, ll. 1-2. The *yati* should lead a lone life and should not associate with even other ascetics. The inhibition, combined with others against gathering disciples, taking pride in the beauty of the hermitage etc. is an implied condemnation of *maṭhas*. It will be noted that modern *maṭha* life is opposed to *yatidharma*.

**56**, 3. Talks on politics and on alms are forbidden by the illustration.

**56**, 19. *Parigraha* may mean either "following" or "property." In the context, which deals with the mode of collecting his *bhikṣā*, it implies condemnation of going round begging, followed by disciples (as was the habit of the Buddha).

**57**, 13-14. A *yati* who makes himself pleasant to the donors of alms will continue in the fetters of rebirth. Bühler takes the prohibition to imply that the *yati* makes humble salutations to the givers of alms, in order to obtain alms. This interpretation is alluded to by Nandapaṇḍita in his comment on the sūtra of *Viṣṇusmṛti*, p. 49, l. 12 *inf.*

**57**, 16-17. The prohibition of the practices named here is absolute, though they are related to the obtainment of alms as their

object. Astrology and palmistry have always been looked down on as beneath a pious person. *Aṅgavidyā,* which is taken as 'palmistry' (which makes it fit with *nakṣatra-vidyā,* which is astrology) is interpreted by two commentators of Manu as "the science of grammar and the five *aṅgas* of the Vedas"; they also interpret '*anuśāsanam*' as 'teaching the Veda.' Medhātithi and Govindarāja take '*anuśāsanam*' to mean 'giving advice' (on worldly matters). *Vāda* is taken to mean "exposition of the śāstras" by Govindarāja, 'disputations' by Medhātithi, and 'the science of dialectics' by Rāghavānanda. "This verse, which occurs also in Vasiṣṭha, X, 21, is historically important, as it shows that in ancient, as in modern times, ascetics followed worldly pursuits and were the teachers or advisers of the people." (Bühler, *Manu,* p. 208).

**59**. 17-18. Food cannot be accepted from *caṇḍalas* (*antyavāsi*) robbers (*paripanthī*), relations (*jñāti*), temples (*īśvara-bhūta*), and crematoria.

**59**, 19. The prohibition of meat and wine as *bhikṣā* may be noted.

**60**. 1. The substances of which the begging bowl may be made are named in an order suggestive of decreasing preference. In the last resort, food may be received in the cupped palm.

**61**, 17-18. Metal bowls as well as bowls which have fractures (*vraṇāni*) are forbidden.

**61**, 9-10. The leaves which are *not* to be used for receiving alms are indicated.

**61**, 20-21. The 'highest place' (परमं स्थानं) from which there is no rebirth is *Mokṣa.*

**61**, 24. परां सिद्धि is the condition of which the attainment of परमं स्थानं is the effect.

**62**, 1-8. The enumeration of the studies suitable to the ascetic is illustrative not exhaustive. For instance, the study of the epics (*itihāsa*) recommended on p. 61, l. 17 is missing in this list.

**62**, 13-18, and p. **63**, 2-7. The *prāṇāyāma* is prescribed here for its expiatory value. It is treated as an element of Yogic discipline on pp. 169-175.

**63**, 9-18. The injuntion to ponder over the consequences of actions (*Karma*) is to induce thereby the spirit of dispassion (*vairāgya*), which is dealt with more fully in the next chapter.

**64**, 9-10. That *mukti* is open *only* to the ascetic is a doctrine that has been upheld by certain schools of thought. Yājñavalkya rebuts the idea here by declaring that liberation (*mokṣa*) is open to

the householder who lives virtuously, is hospitable and regular in the performance of *s'rāddhas*, and is diligent in the pursuit of the knowledge of the Truth. It may be noted that it is *mokṣa* in the strict sense, and not attaining the world of the *Saguṇa* Brahman that is promised.

**64**, 12-15. The same idea is enforced by the citation from the *Mahābhārata*. How can *mukti* be denied to the *gṛhastha* when, in one who becomes an ascetic, all defects that are unspiritual are held as destroyed by mere *sanyāsa*?

**64**, 13. A syllable is missing in the first quarter: अनङ्गैः is suggested for अङ्गैः

**64**, 18-19. The s'loka commences a long passage from *Manusmṛti* which shows how the house-holder's life may lead to emancipation, and how a *mumukṣu* (seeker of liberation) need not formally abandon the *gṛhasthās'rama* from which itself he can gain *mokṣa*. The passage develops two ideas envisaged earlier in *Manusmṛti*, IV, 22-24 and IV, 257-258.

In the second of these, the aged *gṛhastha*, who has discharged his 'threefold-debt' to the sages, the manes and the gods, is advised to retire from worldly concerns, but continue to dwell in his old house and engage in solitary meditation, and he is then assured of *mukti*.

महर्षिपितृदेवानां गत्वानृण्यं यथाविधि । पुत्रे सर्वं समासज्य वसेन् माध्यस्थमास्थितः ॥ एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः । एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति ॥ ४, २५७-२५८.

The expression *param s'reyah* is synonymous with *nis'reyas* or *mokṣa*. He need not enter the order of ascetics formally, because he will, for all intents and purposes, lead an ascetic life like the *kuṭīcaka* ascetic. In fact, Kullūka calls such a person a *sanyāsin*, even though he has not donned the red raiment (*kāṣāya*). Govindarāja regards him as still a *gṛhastha* only. But, a householder is bound to perform the fire-rite as long as life lasts. Is this virtual renunciate to perform this duty? A way-out is shown in *Manusmṛti*, IV, 22-24: the great sacrifices *can* be offered through the sense organs, as well as through speech and breath and knowledge:

एतानेके महायज्ञान्यज्ञशास्त्रविदो जनाः । अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥ वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वदा । वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयम् ॥ ज्ञानेनैवापरे विप्राः यजन्त्येतैर्मखैः सदा । ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा ॥ ४. २२-२४ ॥

Such a householder is termed वेदसन्यासिक here. But, if the renunciation of activity (एवं सन्यस्य कर्माणि, p. 65, l. 19) is taken in the

43

sense of the renunciation merely of the *fruits* of action (कर्मफल)—as explained later on pp. 152-154—the वेदसन्यासिक must continue to perform his appointed *yājñika* duties (यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्। p. 154 *inf.*). The ten-pointed duty, दशलक्षणको धर्मः, (p. 65, ll. 10-12) is as obligatory for the वेदसन्यासिक as for every *ās'ramin*, *i.e.*, for everyone.

*Vedasanyāsa* is not new *ās'ṛama* but is only a mode of life recommended for the spiritually inclined and aged householder. The commentators on *Manusmṛti* make this clear: there are only four *ās'ramas*, no fifth. The significance of tacking a description of *Veda-sanyāsa* at the end of a chapter dealing with ascetic duties (*yati-dharma*), after an eulogy of the householder's life as the best, lies in the need to emphasize the *spirit* of renunciation, as contrasted with the *form* of *sanyāsa*, for securing liberation (*mukti*).

NOTE ON CH. VI & VII. (*Sanyāsa-vidhi* and *Yati-dharma*).

The treatment of the different classes of *yatis* by Lakṣmīdhara is in marked contrast to his enumeration of many types of anchorites on pp. 18-28. On p. 32 he cites a s'loka from the *Anus'āsanaparva* which names (but does not describe the distinguishing marks of) four classes of begging ascetics (*bhikṣu*). The four are: *kuṭīcaka*, *bahūdaka*, *hamsa* and *parama-hamsa*. Mitramis'ra (*Mokṣaprakās'a*, pp. 86 ff.) gives, from the minor upaniṣads, dealing with *sanyāsa*, and from minor *smṛtis*, a full account of the features of each of these four classes. Mādhavācārya (*Parās'arasmṛti*, Vol. I, pt. ii, pp. 175-176) discriminates between two types of *parama-hamsa*, viz. *vidvat* (the *jīvan-mukta*, who has realized *mukti* in life) and the *vividiṣu*, who aspires to *mukti* after death. A minor *upaniṣad* mentions two more classes, who are super-*paramahamsas* : the *turyātīta* ('above the fourth class' i.e. *paramahamsa* class) and *avadhūta*. Both these are nude ascetics. The first of these does not grasp his food with his hands but takes it in his mouth like an animal ; the second is beyond all rules and convention, takes food from one of any caste, and eats like a boa-constrictor, (*ajagara*), *i.e.* keeps his mouth open for any food that may fall within it, and starves if he does not get food. This life is *not* however identical with that described (on pp. 177, ll. 17-37) as *ajagara-vratam*, which is only symbolic of the even-mindedness which comes to the *yogin*.

The *kuṭīcaka* is formally enrolled among *sanyāsins*, after the completion of the usual ceremonies, but he continues to live with his sons and relatives in the family house, or in a hut put up by them for

